A Series of works on Sanskrit Poetics 3.1-5

# साहित्यशास्त्रसमुच्चयः

तृतीयो भागः

## ग्रन्थसूची


पुरोवागादिः i - xix

३.१ काव्यमीमांसा ००१-१७२

३.२ वक्रोक्तिजीवितम् १७३-३७२

३.३ औचित्यविचारचर्चा ३७३-४२४

३.४ कविकण्ठाभरणम् ४२५-४५२

३.५ सुवृत्ततिलकम् ४५३-४९१

# पुरोवाक्

**मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।**
**प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ।।** राजत.५.३४

इत्युक्तेः शारदादेशनाम्ना प्रथितेषु कश्मीरेषु अवन्तिवर्मणः शासने (८२५-८८३ई.) नवमशतकस्य मध्येऽजायत ध्वन्यालोककृदानन्दवर्धनः । स्वयं चित्रकविरसौ देवीशतकनामकं चित्रकाव्यं व्यरचयत्, काव्यशास्त्रग्रन्थे ध्वन्यालोके च चित्रत्वेन काव्येऽकाव्यत्वमुदाहरत् 'न तन्मुख्यं काव्यम्, काव्यानुकारो ह्यसा'-(३.४२पृ.२५२) विति । सोऽयमन्तर्विरोधो ध्वनिप्रस्थान-प्रवर्त्तयितुः प्रथमाचार्यस्य[१]। उपाजीजिवदेष प्रस्थानान्तराणि स्वस्य रक्षणाय। तत एवासौ काव्ये अर्थानां संप्लवनायामाशिश्रिये व्याकरणतन्त्रकृतो भर्तृहरि-प्रभृतीन्, न तु काव्यशास्त्रिणां मार्गान् । के वा त इति प्रश्ने रुद्रटमते श्लेष इति राजशेखरमते माणिक्यपुञ्ज इति, कुन्तकमते च वाक्यवक्रोक्तिरिति । कामं, राजशेखरकुन्तकावानन्दवर्धनात् पश्चाद् जातौ रुद्रटस्तु समकाल एव। नन्वन्योन्याविदितावानन्दवर्धनरुद्रटाविति तृतीयोऽपि कल्पो न कल्पः । आम्, आगमानवेक्षां हि पश्यामोऽत्र कारणम्, अग्निपुराणे हि तत्तेषां शास्त्राणामिव लभ्यत एव साहित्यशास्त्रस्याप्यागमः । जानाति च  स्म वक्रोक्तिप्रभृतीन् ध्वनिविकल्पान् सः । अस्ति विमार्गप्रस्थितानां मार्गस्थत्व-सिद्धिप्रयास एव राजशेखरादेः । तत्र-

### १. राजशेखरः

राजशेखर इव कुन्तकोऽपि आनन्दवर्धनरुद्रटावुद्धरति, अभिनवं तु नेति कदाचित् स एवैतयोः समयो यदाऽभिनवगुप्तः काश्मीरेषु वैराग्येण त्यक्तसंसारः प्रत्यभिज्ञादिकान् दर्शनकल्पान् प्रब्रवीति स्म । अभिनवगुप्तं प्रणिपत्य तन्मार्गेणैव काव्यशास्त्रमधीयानो मम्मटो राजशेखरमप्युद्धरति, कुन्तकस्यापि मार्गानुल्लिखतीति नियतमेवानन्दवर्धन-मम्मटयोः सन्धिकाल एवाचार्याविमौ भूषयामासतुर्भारतीयां भुवम् । तत्र राजशेखरः, कान्यकुब्जेश्वरस्य महीपालस्य समये महोदयनाम्नि कन्नौज-नगरे कुन्तकश्च शारदादेश एव ।

---

१. कारिकाविरुद्धेयं वृत्तिः । कारिकायां चित्रे काव्यत्वं विधीयते, वृत्तौ पुनः काव्ये चित्रत्वम्। कारिका-प्रस्थानमन्वसरन् राजशेखर-मम्मटादयः, वृत्तिप्रस्थानं पुनर्विश्वनाथः ।

बालरामायण-कर्पूरमञ्जरी-प्रभृतीनां चमत्कृत्यतिशीतिजननिपुणानां काव्यकृतीनां कर्त्ता कविराजो राजशेखर एव समदृभत् काव्यमीमांसामपि, या हि सम्पूर्णेऽपि संस्कृतकाव्यशास्त्रेऽसमालङ्कारस्यैव विषयः । नास्त्यत्र शब्दशक्तिसदृशानां प्रौढिमात्रभुवां पदार्थानामवसरः, अस्ति च ध्वनिवादिभिरदृष्ट-चराणां माणिक्यपुञ्जप्रभृतीनां मिष्टमधुराणां विमर्शानामुदारतरोऽवकाशः । प्रतिभया सह या व्युत्पत्तिः काव्यकारणभावे निर्विवादा तस्या आभोगस्तावानेव यावान् भगवत्या मायायाः प्रकृतेर्वा । तमिममतिविचित्रं सरित्समुद्रशैलादिभिः साम्वत्सरिकेण ऋतुचक्रेण च विशेषैरगणनीयैः परिवीतं ध्वनिवादिनो म्लिष्टतयैव स्पृशन्ति । राजशेखरः पुनस्तत्र भुवनकोषमेव संक्षिपति, ज्यौतिषं कालचक्रमपि परिचाययति, प्रत्यभिज्ञापयति च भारतीयान् जनपदानपि । कुमारः काव्यपुरुषः चतस्रोऽपि दिशः परिक्रम्य वत्सगुल्मेषु साहित्यविद्यावधूं परिगृह्णाति । कोऽर्थः? अयमेव यत् साहित्यविद्या विश्वविद्या भवतीति । अयं राजशेखरस्य विशेषो यदसौ शारदीयं नवरात्रमपि वेत्ति, वेत्ति च महानवमीं यत्रासौ राजन्येभ्यः शस्त्रपूजामुद्दिशति । कान्यकुब्ज-जनपदस्य केन्द्रीभूतं कन्नौज-नगरं 'महोदय'- पदेनोद्दिशति, वामनस्वामिनो देवालयस्तस्यैव महानगरस्य विशेषः, तस्यैव वत्सगुल्मक्षेत्रमपि, कालप्रियक्षेत्रमिव। को वाऽङ्गदेशः का च कपिशा सरिदिति राजशेखरत एव प्रत्यभिज्ञायते । को वा चक्रवर्त्ती कश्च पाञ्चालजनपद एवं- विधाः प्रश्ना अप्यत्रैव समाधिमापद्यन्ते । तस्यास्य ग्रन्थस्य सर्वोत्तमं संस्करणं बड़ौदाप्राच्यविद्याग्रन्थमालायाः प्रथमं प्रकाशनं भवति । तत एव प्राकाश्यमलभत अभिनवभारतीसहितं भरतीयं नाट्यशास्त्रम्। अन्तर्विरोधकलुषितं कियदादरणीयमित्यस्माभिरालोचितमेवात्मनः शिमला-नगरस्य 'उच्चानुशीलन'-केन्द्रतः प्रकाशितस्य नाट्यशास्त्रस्य भूमिकायाम्। काव्यमीमांसायाः पुनर्न तादृशी दुरवस्था । बहूपकृतमनेन दलालनाम्ना विज्ञेन विदुषा संपादितेन संस्करणेन नः । अत्र अलङ्कारवादिनश्चतुरोऽप्याचार्यान् राजशेखरः स्मरति- औद्भटीया इत्युद्भटम् वामनीया इति वामनम्, रुद्रटेति नाम्ना रुद्रटम्, समुल्लिखन्नेष ध्वनिकारम् आनन्दवर्धनमपि वेत्ति, किन्तु संवादतत्त्वस्य विवेचने, न तु ध्वनिव्यञ्जनयोः कृते ।

किञ्च-

**तात्पर्या वृत्तिरभिधा लक्षणाऽनुमिती, द्विधा-।**
**अर्थापत्तिः क्वचित् तन्त्रं समासोक्त्याद्यलङ्कृतिः ।।**

**रसस्य कार्यता भोगो व्यापारान्तरबाधनम् ।**
**द्वादशेत्थं ध्वनेरस्य मता विप्रतिपत्तयः ।।**

त्रयोदशशतकीयेनालङ्कारसर्वस्वेऽलङ्कारविमर्शिनीं तन्वता जयरथेनैता उद्धृता

अलङ्कारसर्वस्यैव २५तमे पृष्ठे १९७१ मुद्रिते चौखम्भासंस्करणे । तत्र-

१. तात्पर्या वृत्तिः वाक्यार्थरूपस्य पदार्थानां सम्बन्धस्य सूचिका वृत्तिः ।

२. अभिधा संकेतितार्थस्य प्रतिपत्तये प्रथममुपस्थात्री वृत्तिः । अभिधावादिनो भवन्ति भामहोद्भट-वामन-धनिक-धनञ्जय-रुद्रट-मुकुल-राजशेखर-कुन्तक-महिमभट्ट-भोजराजाः ।

३. लक्षणा उपस्थितायां तात्पर्यानुपपत्तावभिधायाः साधिका वृत्तिः ।

४-५. स्वार्थानुमितिः परार्थानुमितिरित्यनुमिती ।

६-७. द्विधा अर्थापत्तिः अर्थार्थापत्तिः श्रुतार्थापत्तिरिति ।

८. तन्त्रम् द्व्यर्थकः शब्दः, मीमांसकेषु प्रसिद्धः ।

९. समासोक्त्याद्यलङ्कृतिः प्रस्तुतेन वाक्यार्थेन विशेषणमात्रश्लेषेण समानार्थान्तरव्यञ्जनात् । आदिपदेन पर्यायोक्ताक्षेपादेः संग्रहः ।

१०. रसस्य कार्यता भट्टलोल्लटाभिमते क्रमे,

११. भोगः भट्टनायकाभिमतः,

१२. व्यापारान्तरबाधनम् । एक एव व्यापारः, नाऽपरः शब्दे महिमभट्टाऽ-भिमते मते (द्र. व्यक्तिविवेकस्य तृतीयविमर्शान्ते ।)

१.१. तात्पर्यं वाक्यार्थः पदार्थसम्बन्धरूपः । यथोच्यते मम्मटभट्टेन 'आकाङ्क्षा-योग्यतासन्निधिवशात् पदार्थानामन्वये विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसती' त्यभिहितान्वयवादिनः इति (पृष्ठ४ का.प्र.मूलमात्रम्), गामानयेति वाक्ये कर्मत्वस्य या गोनिष्ठा कर्मता तस्या मूलं सन्निधि-रेवाऽव्यवहितत्वरूपः।

२.तदेव परं परमं पार्यन्तिकं वक्तव्यं तत्परम्, तत्त्वं तात्पर्यमिति धनिकादयः। यदुक्तमेतेन दशरूपावलोकस्य चतुर्थे प्रकाशे-'यावत्कार्यं प्रसारित्वात् तात्पर्यं न तुलाधृतमि'-ति । इममेव पक्षमाश्रिता दृश्यन्ते राजशेखर कुन्तकक्षेमेन्द्र-प्रभृतयः सुमेधसः । ध्वनिरिति संज्ञां शब्दगतं व्यञ्जनव्यापारं च न्यक्कृत्याभिधामेव तात्पर्यपर्यन्तां व्यापारपरां मन्वाना इमे सदृशक्षमाः कवयः सुविमर्शाश्चाचार्याः । तत्र

**२. कुन्तकः -**

प्रतीयमानमर्थं प्रति स्वीयमादरं दर्शयन् यदाऽऽनन्दवर्धनस्य स्मार्यते तदा स्पष्टं ब्रूते (पृ.३७) लावण्यस्य स्थाने प्रतीयमानस्यार्थस्य कृते सौभाग्य-पदमुचिततरमि'-ति,(पृ.१५५) 'प्राप्तश्रीरेष'-इति पद्ये प्रतीयमान-स्यार्थस्य द्वैविध्यं

प्रतिपादयन् अन्ते च 'यत्रार्थः शब्दो वे-'ति ध्वनिलक्षणकारिकां प्रस्तुवन्, साधर्यॅश्च श्लेषव्यतिरेकादिकं महता संरम्भेण । अथ पृष्टः कथमार्यो व्यञ्जनातो विमुख इति, उत्तरति वृत्तिरेकैव पर्याप्ता विवक्षितार्थं यावद् धावितुमि-'ति । तृतीयस्योन्मेषस्य पर्यवसाने संक्षिपत्येष सर्वं वक्तव्यम् -(३.६६)

**लावण्यादिगुणोज्ज्वला प्रतिपदन्यासैर्विलासाञ्चिता**
**विच्छित्त्या रचितैर्विभूषणभरैरल्पैर्मनोहारिणी ।**
**अत्यर्थं रसवत्तयाऽऽर्द्रहृदया शक्नोत्युदाराशया**
**वाग् वक्रा सुकवेस्तथैव तु मनो हर्त्तुं यथा नायिका ।।** इति

कुन्तकस्य मते वाक्य एव वाचकत्वमिति वाक्यार्थस्यैवाभिधा-गम्यत्वम् । पूर्ववर्त्तिनो राजशेखरस्यापि स्पष्टमियमेवासीन्मतिः । यथोच्यतेऽनेन -

**व्याकरणस्मृतिनिर्णीतः शब्दः, तदभिधेयोऽर्थः, तौ पदम्** इति (काव्यमीमांसा ६ आरम्भे) एवमेव कुन्तकस्य वक्रोक्तिजीविते १.८ वृत्तावपि-प्रश्नोत्तरयोः -

**ननु द्योतकव्यञ्जकावपि शब्दौ संभवतः ?**

(उत्तरम्) **अर्थप्रतीतिकारित्वस्य सामान्यादुपचारात् तावपि वाचकावेव।** इति ।

अग्रेऽपि निष्कृष्यते

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि ।**

**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः ।।**१.९व.जी.।। इति ।

अनयोर्द्वयोरपि मते वाक्यस्यैव वाचकत्वं भवतीति वाक्यार्थ एव च वाच्य इति का कथा विरामस्य, अनुत्थानपराहता च कथा 'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावस्य ।' एते किल अभिधावादिनः ।

न्यायसाम्यादनुमित्यर्थापत्तिवादौ शङ्कुकमस्तके पातनीयौ । भुक्तिवादाव-खण्डार्थवादौ च भट्टनायक-ब्रह्मवादिवेदान्तिनोः कण्ठे । व्यञ्जनायाः प्रत्याख्यानात् स्वत एव प्रतिख्यातिं प्रापितोऽभिनवगुप्तः । आनन्दवर्धनस्य व्यञ्जनाभिनव-पूर्ववर्त्ती भट्टनायक एव प्रत्याचष्टानो दृष्टः । विविक्ततर एवमभिधा पक्षः । दर्शनान्यपि संवादीन्येवाऽत्र विरोधे ।

कुन्तकोऽपि राजशेखरसृतिमेवानुसरति । एष हि ध्वनिं नोल्लिखति, नोल्लिखति च व्यञ्जनाख्यं शब्दव्यापारम् । अभिधयैवासौ विदितान्तिमार्थः। एतयोर्मते प्रतीयमानत्वं नाम प्रतीतिपथमागतत्वम् । तच्चाश्रयत्यव्यहितपूर्वां प्रतीतिम् । सा च संकेतमिति अभिधाया एव क्षेत्रस्यात्र मूलत्वम् । कुन्तको ध्वनिं

स्मरन् व्यञ्जनाविषये प्रकटितकुतूहलानुदतरत् 'व्यञ्जनस्यैव तत्राधिक्यम्, तस्य चापूर्त्तिं वाचकत्वेनैवाभिधात्मना सम्भवति। ननु शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति कथमत्र नाभिधाया विश्रान्तिरिति व्यञ्जनोत्थानावसरे शब्दस्यापि विराम इति कथं व्यञ्जनायां शब्दवृत्तित्वमिति खण्डितः खड्गेन खड्गः । अथ प्रमाणाभावे कथं प्रमेयोपलब्धिरिति चेद्, युक्तमुच्यते निवेदयामः पृच्छन्तुतरामुत्तरं मम्मटम्, यो हि लक्षणामपि शब्दे समारोपितां घोषयति कथयति च वाच्यार्थनिष्ठतामस्याः। नोत्तरमिदमिति वादप्रागल्भी संश्रीयते चेदन्येषु क्षेमेन्द्रराजशेखरकुन्तकादिषु का वा प्रतिपत्तिः, जयन्तभट्ट-श्रीश्रीहर्षप्रभृतिषु च महत्तरेषु यैः क्रूरमुपेक्षितो ध्वनिस्तन्माता व्यञ्जना वृत्तिश्च। व्यङ्ग्यस्य व्यञ्जकत्वे कथन्नोररीक्रियते वृत्त्यन्तरम्, विरतायां व्यञ्जनायां कथन्नाम व्यञ्जनाया एवार्थान्तरप्रतिपत्तौ स्वीक्रियते प्रवृत्तिः 'शब्दवृत्ति-कर्म्मणां विरम्य व्यापाराभाव' इति नियमस्य तत्रापि जागरूकत्वात् । अत्र यद्येतस्य तिरस्कारस्तर्हि कथमस्य प्रथमं पुरस्कार इति कुन्तकमार्गमेव व्यावहारिकं पश्यामो यत्र सर्वस्याप्यर्थजातस्य वक्रत्वेन संग्रहः । 'भम धम्मिअ' इत्यादिषु निषेधस्य विधिमुखेनोपदेशे किं भवन्तः कारणं मन्यन्ते वक्रत्वं विहाय । पराहत एवं ध्वनिवादः ।

**आगमः** (अहमागमः/अलमागमः)

स एष महानुभावः स्वकीयं काव्यालङ्कारं निबबन्ध प्राचीनतमां भूमिकामाश्रित्य, यत्र साहित्यागमस्यादरः । आगम एषोऽ'अहमागम'-नाम्ना 'अलमागम'-नाम्ना वा अग्निपुराणे समुद्दिष्टः । अत्र नास्ति ध्वनिराक्षेपालङ्कारा-दिभ्यो भिन्नः, अस्ति च 'अलमि'-त्यव्ययपदं रसपदवाच्यतया स्थिरस्य ब्रह्मपदार्थस्य वाचकम् । कथमिति चेदेवम् -

**अक्षरं परमं ब्रह्म सनातनमलं विभुम् ।**
**वेदान्तेषु वदन्त्येकं चैतन्यज्योतिरीश्वरम् ।।**(३३९.१AP)इति

अस्त्येव च तदभिन्नाभिन्नस्य तदभिन्नत्वं नियमतः सुमेधसामभिमतम् । ततश्च यदेव रसत्वं तदेवालङ्कारत्वम् यदेव चालङ्कारत्वं तदेव रसत्वम्, उभयोरपि ब्रह्माभिन्नत्वेन प्रतिज्ञानात् । रिक्तं तर्हि 'रसस्य च प्राधान्यान्नालङ्कारत्वमि'ति मम्मटवचः ।

**कुन्तकस्य भ्रमः**

अत्रेदं विज्ञेयं यत् कुन्तकस्य 'रसवदलङ्कार'-पदमाश्रित्य तदर्थ-विषयिण्यो या उत्प्रेक्षास्ताः सर्वा अप्यनुत्थानपराहताः, दण्डिनो रसवत्पदस्य या प्रकारता तन्निरूपिता याऽनुयोगिता तदवच्छेदकतायाः पदवाक्यकाव्या-न्यतमत्वनिष्ठाया

एवाङ्गीकृतेः । 'रसवत् पदमि'ति निस्तुषं वचः, 'काव्यं रसवदिति वत् । मूलतो हि रसवत्त्वमलङ्कार इति शुद्धो व्याहारः, या च रसवत्ता सा रस एव विशिष्टवाचकात् परं प्रयुक्तस्य भावप्रत्ययस्य विशेषणपरत्वेन स्वीकृतेः । तथा च रसवदिति विशिष्टवाचकात् पदात् परं प्रयुज्यमाने भाववाचक-'त्व'-प्रत्ययार्थो रस एव । रसवत्त्वं रस एवेति रसस्यालङ्कारतायां का नु ध्वनिवादे विप्रतिपत्तिः । तस्तुतो ध्वनिवादो न साहित्यागमसमर्थितो वादः । कुन्तकस्य रसवत्त्वस्यालङ्कारत्वनिराकरणे संरम्भः । यथैतत् तद् अत्रैव पृ.१०३तः१२०पृ. पर्यन्तं प्रसृते ग्रन्थे द्रष्टव्यम् । तत्र समाधानमपि दर्श्यते, किन्तु विचारभित्तिरेवासावपहस्तितेति का वार्त्ता तत्र लिखितस्य समर्थनाचित्रस्य । सोऽयं चक्षुरुन्मीलनव्यतिरेकः ।

**कुन्तकग्रन्थस्य दुरवस्था**

ग्रन्थस्यास्य कीदृशी दुर्गतिरिति निवेदनमप्यावश्यकम् । साम्प्रतं सुशीलकुमारडेमहोदयस्य १९२३ ख्रीष्टाब्दे प्रकाशितं वक्रोक्तिजीवितसंस्करणं तस्यैव १९२८ ख्रीष्टाब्दे प्रकाशितात् तृतीयात् संस्करणात् तिरोधानमवाप, तदपि च डॉ.के. कृष्णमूर्त्तिमहोदयस्य धारवाडतः १९७७ वर्षे प्रकाशितात्। तदिदं संस्करणं वक्रोक्तिजीवितस्य सर्वोत्तमं संस्करणम् । अत्र जैसलमेर-जैनपाण्डुग्रन्थभाण्डागारीयस्य ताडपत्रग्रन्थस्य छायाप्रतयोऽपि प्रदत्ताः मध्ये च वाराणसीसंस्थायाः चौखम्बाप्रकाशनसंस्थाया अपि डॉ. राधेश्याममिश्र- द्वारा हिन्द्यानूदितं वक्रोक्तिजीवितं १९६७ वर्षे प्रकाशितम् । हिन्दीक्षेत्रे तदेव प्रचारमापत् । ततोऽस्माभिर्महद् वैशसमन्वभावि । तृतीयस्योन्मेषस्यान्तिमाद् भागाच्चतुर्थमुन्मेषं यावत् मूलमात्रं दत्तम्, न तु तत्र कृष्णमूर्त्तिसंस्करणे सुलभं वक्रोक्तिजीवितम् । नैका वृत्तयोऽपि तत्रातथारूपा दृष्टाः । मध्ये वृन्दावनीयेन सिद्धान्तशिरोमणिना श्रीविश्वेश्वरेणापि वक्रोक्तिजीवितमासीत् प्रकाशि-तम् । तत्र स्मरामस्त्रुटितानां कारिकांशानामसदृशीं प्रतिपूर्त्तिम् । सेयं महती कथा वक्रोक्तिजीवितस्य ।

<u>ग्रन्थसंज्ञा</u> ग्रन्थ एष त्रिभिरङ्गैः समवायमश्नाति

१. कारिका

२. वृत्तिः

३. संग्रहकारिकेति

तत्र कारिकाग्रन्थस्य नाम 'काव्यालङ्कार' इति ।

वृत्तिग्रन्थस्य वक्रोक्तिजीवितमिति

तृतीयस्योद्धरणांशस्यापि द्वितीय एव गणना ।

किन्तु साम्प्रतमिमे सर्वेऽप्यंशा 'वक्रोक्तिजीवित'-नाम्नैव निर्विशेषमुदीर्यन्ते ।

इदमत्र निवेदनीयं यत् तृतीयचतुर्थयोरुन्मेषयोर्वृत्तिस्तत्पूर्ववर्त्तिनोरुन्मेषयोर्वृत्तेः किञ्चित् कृत्रिमेवाऽनुभूयते ।

श्लोकानामंशा एव यत्रोदाहरणतया दत्तास्तेषां पूर्णं रूपमत्रैव ग्रन्थे सुलभञ्चेत् तस्य पृष्ठसंख्याऽपि कोष्ठके दत्ता । द्वित्राणामंशानां पूर्णश्लोको मूले न लब्धश्चेत् तत्कृते पश्चात् परिशिष्टं योजितम् ।

**मुख्यमुपजीव्यम्**

महाकविः, कविराजः, चूडामणिकविरिति यथार्थतयाऽऽदर्त्तुमर्हस्तत्र-भवान् राजशेखरोऽत्र कुन्तके मुख्य उपजीव्यः । तस्य बालरामायणं, बालभारतम्, कर्पूरमञ्जरी बिद्धशालभञ्जिका'चेति चत्वारः प्रबन्धा अत्र वक्रताया उदाहरण-त्वेनादृताः । तेषां सन्दर्भा यथास्वमत्र दत्ताः । सुभाषितावलीप्रभृतीनां तु सन्दर्भाः पाठकैः स्वयमन्वेष्टव्याः ।

राजशेखरस्य काव्यमीमांसापि गुच्छकेऽत्र लम्भितावकाशा सविशेषं सम्पाद्य । ननु कीदृशोऽत्र विशेष इति चेद् द्वादशं त्रयोदशं चाध्यायं पश्यन्तु। तत्र संवादानां द्वात्रिंशत् प्रकारास्ते स्फुटं द्रष्टव्याः । क्व संलक्ष्यक्रमा-संलक्ष्यक्रमव्यङ्ग्यप्रभृतयः परिभाषाः क्व च माणिक्यपुञ्जप्रभृतयः । क्व ध्वनिः, क्व चोक्तिः । किञ्च कोऽयमाग्रहो ध्वनिवादिनां यद् व्यङ्ग्त्वेनाभि-मतस्यैवार्थस्य प्राधान्य एव ध्वनित्वमिति, यथा हि व्यङ्ग्योऽर्थः शब्दतो यत्किञ्चित्त्वेनैव भासमानोऽभिमन्यते तथैव वाच्योऽपि, अत एव शब्दात् प्रत्यक्षाय प्रवृत्तिः । ईषन्न्यूनतायां न सर्वापहारः । यो हि संमुग्धिमा वाच्ये स एव व्यङ्ग्येऽपि समनुभूयतेऽर्थे ।

**३. क्षेमेन्द्रः**

प्रकाशेन्द्रपुत्रः व्यासदासापरनामा तत्रभवान् क्षेमेन्द्रः गुच्छकेऽत्राभिधा-वादी तृतीयः आचार्यः । एतस्य १. औचित्यविचारचर्चा २. कविकण्ठाभरणम् ३. सुवृत्ततिलकञ्चेति त्रयो ग्रन्था आदीयन्ते, साहित्यशास्त्रे तेषामपि संग्रहीतुमावश्यकत्वात् । साक्षादभिनवगुप्तादधीतसाहित्योऽपि महामतिरेष ध्वनौ वाचंयमः ।

**४. महिमभट्टः**

महिमभट्टः १०५०ई० समये कश्मीर एव जनिमलभत व्यक्तिविवेक-कारस्तत्रभवान् महिमाचार्यः । स चाभिनवगुप्तं निभृतं कुन्तकं च सनामोल्लेखं प्रत्याचष्टे । कुन्तकमुपेक्षयाऽधिक्षेपगर्भयोक्त्या अभिनवगुप्तं पुनर्विद्वन्मानि-पदेन।

मन्ये मम्मटस्येव तस्य नास्ति महामाहेश्वरेऽस्मिन्नज्ञातदार-सुतादिकथे रहसि रममाणे गुप्ते तथा श्रद्धा। अस्ति च महिमाचार्यो व्यक्तिविवेकरचनाकाले वयसोशीतिमति-क्रान्त इवाब्दानाम्, तदा तस्य दौहित्रपौत्रा अप्यजायन्त प्रथितनयाः सत्सु लब्धप्रतिष्ठाश्च । त इमे समकालभवास्त्रयो ध्वनिध्वंसकाः । राजशेखर एतेषु महान् कविः कविराजश्रेणीमण्डनम्, काव्यशास्त्रेऽपि गूढगूढानां विचाराणां दर्शी, कुन्तकः भावकोत्तंसः, महिमभट्टः पुनः अविवक्षितावचनो विवक्षितैकवचनोऽन्वीक्षा-निपुणः सुकविः । नाशक्नोदेतस्य प्रहारान् सोढुं ध्वन्यात्मवादः । अस्यैव महामतेरसौ शङ्कनादो यद् वाक्यप्रयोगे य एव पार्यन्तिकोऽर्थः स एवार्थः, न च भवति प्रतीयमानस्यार्थस्य शब्दार्थत्वम्, ततश्च न भवति शाब्देऽर्थे-ऽर्थान्तरत्वं नामेति । इम एव भवन्ति ध्वनिविरोधे अभिधावादिनः ।

अथ का वाचोयुक्तिरर्थान्तरत्वमस्वीकुर्वतो महिमभट्टस्य तर्के तात्पर्य-विषयीभूतः पार्यन्तिक एवाऽर्थः शब्दार्थः, स एवान्तिमः, अवधानपूर्वं तस्मिन्नेव प्रयुज्यमानस्तदेकप्रतिपादक एव शब्दः विरमतितरां न तमर्थमप्रतिपाद्य व्यक्तिविवेकस्यान्तिमे तृतीये विमर्शे । अयमेव खलु तस्य निष्कर्षः-

शब्दस्यानेकार्थतावगममात्रमूलोऽयमद्यापि
कवीनामर्थान्तरप्रतीतिभ्रमः, इति व्यर्थः
शब्दशक्तिपरिकल्पनप्रयासः ।। इति (पृ.४७९चौ.सं.१९६४)

महिमभट्टस्य स्पष्टोक्तिः - (व्यक्तिवि.पृ.१११ चौ.सं.६४)

**'शब्दस्यैकाभिधा शक्तिरि'ति,**
**'अर्थस्यैकानुमा मते'ति,**
**'न व्यञ्जकत्वमनयोः समस्ती' -ति च ।**

**यावद्भिरर्थैः सम्बन्धः प्राक् शब्दस्याऽवधारितः ।**
**तावत्स्वन्यनिराशंसः श्रुतः सन् कुरुते गतिम् ।।**

**ततो यदर्थानुगुणा सामग्र्यस्योपलभ्यते ।**
**स एवार्थो व्यवस्थाप्यः सत्स्वप्यन्येष्वबाधितः ।।**

**तेनोभयार्थानुगुणो व्यनक्त्यर्थावुभावपि ।**
**ययोः सामर्थ्यतः सिद्ध्येदुपमानोपमेयता ।।**

**इत्थमर्थान्तरे बुद्धिं [1]ध्वनिरेवादधात्ययम् ।**
**तन्निबन्धननिर्बन्धो निर्निबन्धन एव सः ।।**

(व्यक्तिवि. संग्रहका. १२-१५,पृ.४८७-८८)

पक्ष एष रसगङ्गाधरे **पण्डितराजेनाप्युपस्थापितः** । तथाहि-

नानार्थशक्तिविषयकदृढसंस्कारशालिनां प्रकरणज्ञानवता-
मपि पयो रमणीयमित्यादेर्वाक्यात् प्रथममर्थद्वयो-
पस्थितिरनुभवसिद्धा ।' इति (रसगङ्गाधरे द्वितीयाननारम्भे[2]) ।

तदित्थं शिथिल एव पक्षस्तृतीयक्षणनिष्ठध्वंसप्रतियोगितायाः । सिद्धमित्थं राजशेखर-कुन्तक-क्षेमेन्द्रा अपि तामेव पदवीमनुसस्रुर्यामभिधैक-शक्ति-वादिनोऽन्वसीसरन् ।

राजशेखरः, तदुपजीवी कुन्तकः, तदुभयसमीक्षको महिमभट्टश्चेति त्रयोऽप्याचार्यास्तात्पर्यविषयीभूतमेकमेवाभिधेयं मन्वते, तथैव क्षेमेन्द्रोऽपि ।

ग्रन्थमालेयं येषामार्थिकेन सहयोगेन प्रवर्त्तमानाऽस्ति ते **M.R. Moraraka Foundation, Mumbai** इति संस्थानस्याध्यक्षा श्रीमन्तः कमलकुमारमोरारकामहोदया धन्यवादैरभिनन्द्यन्ते अभिनन्द्यन्ते च सममाशीर्भिः सर्वेऽपि पुत्रपुत्रीपरिवारसदस्या येषां सेवां विना नास्मीदानीं शास्त्राण्येतान्या-लोडयितुं समर्थः ।

**वृद्धत्वे वपुषि सुशैथिलीमवाप्ते**
**पातोऽभूद् वचसि न मेऽद्य सा तु मातुः ।**
**कार्त्तज्ञ्याऽतिशय-सुवन्दनीयताया-**
**मग्रत्वं बत दधती कृपातिशीतिः ।।** इति ।

**रेवाप्रसादस्य द्विवेदिनः (सनातनः)**

१७ फरवरी, २०१५
फाल्गुन कृष्ण त्रयोदशी,
महाशिवरात्रिः, संवत् २०७१

०००

---

१. ध्वनिर्बैखरीशब्दः, प्रतीतपदार्थो ध्वनिः शब्द इति महाभाष्यम् । २. पृ.१३७-३८

अभिधावादिनो

## राजशेखर-कुन्तक-क्षेमेन्द्राः

व्यतीते भरतादूर्ध्वं संवत्सर-शतद्वये ।
सार्धे च विक्रमादित्यः स्साहसाङ्कोऽशिषद् भुवम् ।।१।।
कालिदासस्ततः पूर्वं शाकुन्तलमरीरचत् ।
प्रायूयुजच्च धर्मस्य प्रतिष्ठायै नृपः स तत् ।।२।।
विक्रमानन्तरं पञ्च शताब्द्यो व्यत्यगुस्तदा ।
दाक्षिणात्यः कविर्दण्डी काञ्चीक्षेत्रे व्यजीजनत् ।।३।।
गद्यपद्यकविर्दण्डी काव्यशास्त्रमपि व्यधात् ।
काव्यलक्षणमित्येतत् काव्यादर्श-श्रुतिं गतः ।।४।।
परिच्छेदास्तु तत्रासन् प्रायः पञ्च परन्तु ते ।
त्रय एवाभ्यमन्यन्त चतुष्ट्वं प्राप्य मुद्रिताः ।।५।।
तस्येदं काव्यशास्त्रं दिश्युत्तरस्यां त्रिविष्टपे ।
पूज्यतेऽद्यापि तेनास्य प्रकटो महिमा महान् ।।६।।
जातस्तत्रैव काले तु सूनू रक्रिलगोमिनः ।
प्रणम्य [1]सार्वं सर्वज्ञं भामहालङ्क्रियां[2] व्यधात् ।।७।।
काव्यालङ्कारनाम्नीं श्रीभामहालङ्कृतिं त्विमाम् ।
उद्भटोऽटीकताष्टम्यां शताब्द्यां शारदाभुवि ।।८।।
विप्रकृष्टो यतः काञ्चीवासी दण्डी ततस्ततः ।
सन्निकृष्टोऽभजत् पूजां भामहः सौगतोऽपि सन् ।।९।।
दण्डी तु वैदिकस्तस्य नामाप्याऽऽद्रियते स्म नो ।
यच्चाऽप्याऽऽद्रियतेऽस्मै तदन्यथात्वजुगुप्सितम्[3] ।।१०।।

---

१. 'प्रणम्य सार्वं सर्वज्ञमि'ति (१.१) सार्वं सर्वजनहितम्, न तु स्त्रीशूद्रादीन् परित्यजन्तं, वैदिकमिव । 'सर्वज्ञः शिवबुद्धयोः; अत्र सार्वशब्दस्य बलाद् सर्वज्ञशब्दो बुद्धमात्र-सीमितः।

२. भामहालङ्कृतिर्भामहालङ्कारः ।

३. अभिनवगुप्तो दण्डिनमपि लोल्लटस्य रसोत्पत्तिवादे निपातयति रससूत्रविचारे अभिनव-भारत्याम् । दण्डिग्रन्थे पुनर्नास्ति गन्धोऽपि उत्पत्तिवादस्य ।

भामहो भरतोद्दिष्टं काव्यागममखण्डयत् ।
दण्डी पुनस्तमेवाङ्गीकृत्य शास्त्रे प्रवृत्तिभाक् ।।११।।
तस्मिन्नेव तु कालेऽभूद् वामनो द्विगुणान् गुणान् ।
कल्पयित्वा जुघोषैषां काव्यात्मत्वं सुधीवरः ।।१२।।
उद्भटो रूपकादीनां सारतामुज्जगौ ततः ।
अलङ्कारात्मतावादिष्वगण्यत सुधीवरैः ।।१३।।
अहो सभायामेकस्यां तिष्ठतोः पण्डितेन्द्रयोः ।
एको गुणात्मतावादी परोऽलङ्कारसारवाक् ।।१४।।
अस्मिन् काले गुणोऽप्यासीदलङ्कारतया मतः ।
अलङ्कारोऽप्यतो मान्योऽभवद् गुणतया विदाम् ।।१५।।
अलं ब्रह्म रसोप्यस्मात् रसोऽलङ्कारतां गतः ।
अलङ्कारो रसत्वञ्च ब्रह्माभिन्नतया ततः ।।१६।।
अभेदवाद एषोऽस्ति मतो भोजाऽच्युतादिभिः ।
ध्वनिवादे विपर्यासः पारम्पर्य-विमानितः ।।१७।।
अलङ्कारात्मतावादो रुद्रटस्याप्यबीभवत् ।
राद्धान्तोऽस्मिन् हि कालेऽभूत् क्रान्तिः काचिदनीदृशी ।।१८।।
अलङ्कारात्मतावादो वैदिकाऽऽगमिनां मतः ।
अलङ्कारपदं तत्र ब्रह्म-पर्याय [1]आगमे ।।१९।।
अलं ब्रह्म, स्वरूपार्थे कारप्रत्यय आगते ।
तत्र नो भिन्नतालेशोऽप्यवकाशाय कल्पते ।।२०।।
आगमोत्थां कथामेतां विस्मृताः केचिदूचिरे ।
अलङ्कारस्य संयोगं समवायं गुणस्य च ।।२१।।
कलायामपि काव्येऽपि स्थूलदेहादिविश्ववत् ।
विपर्यासं गता तस्मादस्माकं वैदिकी सृतिः ।।२२।।
कलायां स्थूलविश्वस्य सम्बन्धाः शङ्कयुः क्षमाः ।
कथं वा वास्तवं तत्त्वं स्प्रष्टुं विप्रतिपत्तिषु ।।२३।।

---

१. अग्निपुराणे ३३९.१ वचनम् -
अक्षरं परमं ब्रह्म सनातनमलं विभुम् ।
वेदान्तेषु वदन्त्येकं चैतन्यज्योतिरीश्वरम् ।।

क्रान्तिकाले त्वमुष्मिन् नः शास्त्रे पविरिवापतत् ।
आनन्दवर्धनः कश्चिद् ध्वनि-सिद्धान्तमाप यत् ।।२४।।
नूनं बौद्धाः ध्वनिं केचित् प्राप्तवन्तः पुराऽभवन् ।
सङ्गात् तु तेषामानन्दोऽलब्धैता ध्वनिकारिकाः ।।२५।।
कारिकास्वासु वृत्तिं स्वामालोकाख्यां व्यरीरचत् ।
आनन्दवर्धनो गुप्तो यस्यां स्वं लोचनं दधौ ।।२६।।
नवमेऽर्धे गतेऽष्टम्याः शताब्द्याः परमेषकः ।
रत्नाकर-शिवस्वामि-काले चित्रकविस्त्वभूत् ।।२७।।
'काव्यस्यात्मा ध्वनिः कश्चिदपूर्वोऽश्रुतनामकः ।
विकल्पात्मा त्वलङ्कारो बाह्योऽननुगुणोऽपि सः ।।२८।।
अङ्गोपस्कारकर्त्ता वै स एष त्यज्यते क्वचित् ।
आगमापायिभावं तदलङ्कारास्तु बिभ्रति'।।२९।।इति
कविरेष परित्यज्य वैदिकं दण्डिनं गुणे ।
भामहस्यानुसस्त्रे गां सांख्यवत् त्रैगुणीं श्रयन् ।।३०।।
ब्रह्म क्व नु विलुप्तं नोऽलंशब्दार्थात्मतां गतम् ।
प्रधानतां गतं चापि तत्त्वान्तर-निवारणम् ।।३१।।
ध्वनिवादे समायाते गान्धीवादे यथाऽवनौ ।
उपप्लवस्य साम्राज्यमाच्छादयत भूतलम् ।।३२।।
ध्वनेर्विरोधे भूयांसः पक्षा जाताः पुरोगताः ।
समर्थकेषु किन्त्वासीदेको माहेश्वरो महान् ।।३३।।
चक्रुर्विरोधं तस्यापि शिष्यास्तस्यैव पण्डिताः ।
तेषां द्वादशधा पक्षा अभ्यगण्यन्त तैः स्वयम् ।।३४।।

(१) तात्पर्या शक्ति-
(२) रभिधा
(३) लक्षणा
(४-५) नुमिती,
(६-७) द्विधा अर्थापत्तिः, क्वचित् -
(८) तन्त्रं
(९) समासोक्त्या-ह्यलङ्कृतिः ।।३५।।

रसस्य-
(१०) कार्यता
(११) भोगो
(१२) व्यापारान्तरबाधनम् ।
द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः ।।३६।।
(-अलङ्कारसर्वस्वे विमर्शिनी पृ.२५चौ.सं.१९७१)

आनन्दवर्धनस्यैव काले जातः स रुद्रटः ।
शलाकाचार्य इत्यस्य संमाने ब्रूमहे वयम् ।।३७।।
रुद्रटोऽपि न काव्यात्मभावमालक्ष्यत ध्वनौ ।
श्लेषमत्र प्रतीतौ तु पृथगर्थस्य मानयन् ।।३८।।
एवं पञ्चाप्यलङ्कारे काव्यात्मत्वमुदैरयन् ।।३९।।
न ध्वनौ, समकालास्तु क्षेमेन्द्रो राजशेखरः ।
कुन्तकाचार्य इत्येतेऽप्यलङ्कारात्मवादिनः ।।४०।।
माणिक्यपुञ्जे संवादे ध्वनिं श्रीराजशेखरः ।
वाक्यवक्रोक्तिभेदे च कुन्तकः समजीगिलत् ।।४१।।
एतेषां वैदिकानां तु भामहेन समं समे ।
गुच्छके प्रथमे ग्रन्थाः सद्य एव प्रकाशिताः ।।४२।।
ध्वन्याचार्यत्रयीग्रन्थाः[१] पूर्वमेव प्रकाशिताः ।
गुच्छकत्वं द्वितीयं तु तत्र ग्राह्यं ततः परम् ।।४३।।
तृतीये गुच्छके त्वस्मिन्नभिधावादिनां त्रयी ।
श्रीराजशेखरः श्रीमान् कुन्तकः क्षेम एव च ।।४४।।
कुन्तके कृष्णमूर्त्यार्यै कुप्पुस्वाम्यादिभिर्ध्वनौ ।
इङ्गल्सादिभिरप्यार्यैः कृताः शोधा अधिश्रिताः ।।४५।।
राजशेखर-मीमांसा दलालैर्विशदीकृता ।
बडौदाग्रन्थमालायां प्रथमपुष्पतयादृता ।।४६।।

१. आनन्दवर्धनः, अभिनवगुप्तः, मम्मटभट्टश्चेति त्रयो ध्वनिवादिनः तत्र आनन्दवर्धनस्य ध्वन्यालोकः, अभिनवगुप्तस्य लोचनेन सह २०१३ वर्षे प्रकाशितः, मम्मटस्य काव्यप्रकाशमूलं १९८१ वर्षे काशीहिन्दुविश्वविद्यालयतः ।

सारस्वतादिभिर्हिन्दीभाषयाऽनूदिता, समम् ।
इतिहासादिसङ्केतैः, संश्रिते संस्कृताविह ।।४७।।
क्षेमेन्द्रस्य त्रयो ग्रन्था अभिधैकाभिवादिनः ।
औचित्यस्य विचारश्च कण्ठाभरणमेव च ।।४८।।
सुवृत्ततिलकं चैव दीयन्तेऽत्र महामतेः ।
एते सर्वेऽभिधामात्रे वीक्षन्ते शब्दवृत्तिताम् ।।४९।।
राजशेखरमीमांसैवासूत द्वौ महामती ।
वक्रोक्तिं कुन्तको गायन् क्षेमेन्द्रश्चौचितीं स्पृशन् ।।५०।।
काव्ये मीमांसिते ह्लाद-हेतुत्वे कुन्तको दधौ ।
वक्रोक्तिरूपं साहित्यं क्षेमेन्द्रश्चौचितीं पराम् ।।५१।।
औचित्ये यद्धि सादृश्यं तत्रालंतापि गर्भगा ।
भाव्यतेऽलङ्कृतिःसा च या चोक्तिःसाप्यलङ्कृति ।।५२।।
एते त्रयोऽभिधामात्रे शब्दवृत्तित्वदर्शिनः ।
का कथा शब्दवृत्तित्वे ध्वनिशब्देऽप्यसूयिताः ।।५३।।
ध्वनिं त्रयोऽप्यमी धीराः नास्प्राक्षुर्विषबीजवत् ।
केवलामभिधामेवाऽमन्यन्तान्त्यार्थदायिकाम् ।।५४।।
एकोऽभिनवगुप्तोऽभूद् ध्वनिपक्षे विरोधिनः ।
स कृष्णः कौरवान् कृत्स्नानिवाकार्षीद् गतौजसः ।।५५।।
ह्लादे काव्योत्थिते सर्वेऽप्यमी संप्रतिपादिनः ।
हेतौ तु सर्वेऽभिद्यन्त ध्वनिवक्रौचितीस्वराः ।।५६।।
साहित्येतरमार्गीयानाश्रित्यैते तु दार्शनान् ।
व्यवदन्त स्वकान् ग्रन्थानकुर्वत च दुस्सहान् ।।५७।।
शब्दे शक्तित्रयं मत्वा रसञ्च रसिकात्मनि ।
गुणान् रसे समुत्पात्य हसन्त्यते ध्वनीश्वराः ।।५८।।
ऊर्ध्वबाहुर्विरौत्यत्र भोजराजः समेऽप्यमी ।
अभिन्नात्मान इत्येवं न तु कोऽपि श्रृणोति तम् ।।५९।।
प्रकाशेन्द्रतनूजोऽपि व्यासदासाऽपराभिधः ।
क्षेमेन्द्रोऽपि ध्वनिं नामतोऽपि नैवास्पृशत् सुधीः ।।६०।।

अधीत्याऽभिनवादेव साक्षात् साहित्यमेषकः ।
महामतिरुवाहैव स्वातन्त्र्यं काव्यदर्शने ।।६१।।
वक्रोक्तिरौचिती चैव स्वयं ध्वनिकृतोदिते ।
ताभ्यामपि कृतार्थत्वे ध्वनिक्लेशो निरर्थकः ।।६२।।
कुन्तकानन्तरं जातो महिमाऽपि महामतिः ।
अभिधामात्रमेवालममंस्तान्त्यार्थ-बोधने ।।६३।।
अभिधावादिनामस्ति पञ्चमो मुकुलः सुधीः ।
स तु गुच्छे तुरीयेऽत्र भविष्यति कृतादरः ।।६४।।
चतुर्थो महिमाचार्यः स च पूर्वं प्रकाशितः ।
या तस्य प्रतिपत्तिः सा प्रदत्ताऽत्राधिभूमिकम् ।।६५।।
ग्रन्थाः सर्वेऽपि प्रागेव मुम्बईतः प्रकाशिताः ।
हैदराबादतश्चापि ते सर्वेऽत्र समाश्रिताः ।।६६।।

संशोधनं यदपि वाञ्छति हस्तलेख-
कान्तार-शोधन-धृतिं विदुषां गरिष्ठाम् ।
तत्रापि यत् खलु ललाटगतं तृतीयं
चक्षुस्तदेव तु विवेकविधौ प्रधानम् ।।६७।।

चापलं त्विदमस्माकं पुरो मातुः प्रकाश्यते ।
पितुश्च विश्वधाम्नोऽस्य'परमीशितु'रित्यलम् ।।६८।।

काश्यपस्य **द्विवेदिनो रेवाप्रसादस्य**
सनातनस्य

१७ फरवरी, २०१५
महाशिवरात्रिः

साहित्यशास्त्रसमुच्चयः - ३.१

।।श्रीः।।

आचार्य-राजशेखरस्य कृतिः

# काव्यमीमांसा

सम्पादकौ

**म.म. रेवाप्रसादो द्विवेदी**

प्रोफेसर इमेरिटस (संस्कृत)

काशीहिन्दूविश्वविद्यालयः, वाराणसी

**प्रो. सदाशिवकुमारो द्विवेदी**

संस्कृतविभागः, कलासङ्कायः

काशीहिन्दूविश्वविद्यालयः, वाराणसी

प्रकाशकम्

**कालिदाससंस्थानम्**

वाराणसी-५

Sāhityaśāstrasamucchaya - Part 3.1

# KĀVYAMĪMĀNSĀ

by

**RĀJAŚEKHARA**

**EDITORS**

**M.M. Prof. REWA PRASAD DWIVEDI**

Emeritus Professor (Sanskrit),

Banaras Hindu University

VARANASI

**PROF. SADASHIV KUMAR DWIVEDI**

Dept. of Sanskrit, Faculty of Arts,

Banaras Hindu University

VARANASI

Publisher

**KĀLIDĀSA SANSTHĀNA**

VARANASI

# काव्यमीमांसाविषयानुक्रमः

**प्रथमोऽध्यायः - शास्त्रसङ्ग्रहः** ११-१२

काव्यविद्याया अष्टादश अधिकरणानि तेषां प्रवर्त्तका आचार्याश्च ।

**द्वितीयोऽध्यायः शास्त्रनिर्देशः** १३-१५

वाङ्मयं द्विविधं शास्त्रं काव्यञ्च ।

शास्त्रम् अपौरुषेयं पौरुषेयञ्च ।

वेदाः अपौरुषेयम्, उपवेदाः, पञ्चमो गेयवेदः।

वेदाङ्गम् ६, सप्तममङ्गं साहित्यम् ।

शिक्षादयः ३-९ पौरुषेयम - पुराणम् १ - परिक्रिया, पुराकल्पः,

मीमांसा, स्मृतिः इति १४ विद्यास्थानानि ।

४ वेदाः, ६ अङ्गानि, ४ शास्त्राणि - चतुर्दश

काव्यं पञ्चदशं विद्यास्थानम्

वार्त्ता, कामसूत्रम्, शिल्पिशास्त्रम्, दण्डनीतिः एतैः चतुर्भिः

सह चतुर्दश एवाष्टादश

**पञ्चमी साहित्यविद्या**

आन्वीक्षिकी द्विधा

१. जैनबौद्धचार्वाकाः पूर्वःपक्षः,

२. साङ्ख्यं न्यायवैशेषिकौ चोत्तरः पक्षः

इमे षट् तर्का

तिस्रः कथाः वादः जल्पो वितण्डा च

सूत्रम्, वृत्तिः पद्धतिः, भाष्यम्, समीक्षा, टीका पञ्जिका १५

कारिका, वार्त्तिकम्

शास्त्रकविः १५

साहित्यविद्या १५

**तृतीयोऽध्यायः - काव्यपुरुषोत्पत्तिः** १६-२०

काव्यपुरुषः उशना, वाल्मीकिः । सरस्वत्या ब्रह्मलोक यात्रा, सारस्वतेयस्य

कुमारेण सह दिग्भ्रमणम् १७

पौरस्त्यादीनां जनपदानां रीतिवृत्तिप्रवृत्तयः,

गौरी सरस्वती च मिथःसम्बन्धिन्यौ सरस्वतो मयोर्दाम्पत्यात् १९

योजनसहस्त्रं चक्रवर्त्ति क्षेसम् १९

**चतुर्थोऽध्यायः - शिष्याः कविभेदाश्च** २१-२५
स्मृतिः, मतिः,प्रज्ञा च २१
त्रिविधाः शिष्याः बुद्धिमान्, आहार्यबुद्धिः दुर्बुद्धिः २१
समाधिगुणः २१
प्रतिभा, व्युत्पत्तिः २२
सारस्वत कविः, आभ्यासिकः, औपदेशिकः २३
भावकत्वम् कवित्वम् २३
अरोचकी, सतृणाभ्यवहारी २४
मत्सरी भावकः २४
तत्त्वाभिनिवेशी भावकः २५

**पञ्चमोऽध्यायः - व्युत्पत्तिः काव्यपाकः** २६-३१
कविस्त्रिधा शास्त्रकविः-२ काव्यकविः-८ २८
शब्दकविः ३१
अर्थालङ्कारकविः,उक्तिकविः,रसकविः,मार्गकविः,शास्त्रार्थकविः २९
कविः कनीयान् विद्यास्नातकः, हृदयकविः अन्यापदेशी,
घटमानः, महाकविः, कविराजः, आवेशिकः,
अविच्छेदी, संक्रामयिता २९
**पाकः**- वाक्यपाकः, शब्दपाकः ३०
पिचुमन्दपाकः, बदर-पाकः, मृद्वीकापाकः, वार्त्ताकपाकः,
तिन्तिणीपाकः, सहकारपाकः, क्रमुकपाकः, त्रपुष्पाकः,
नारिकेलपाकः, कपित्थपाकम् ३१

**षष्ठोऽध्यायः- पदवाक्यविवेकः** ३२-३८
पदम् - ३२ शब्दार्थौ पदम् । तच्च पञ्चवृत्ति ।
तत्र सुब्वृत्तिः पञ्चतयी । समासवृत्तिः षोढा । तद्धितवृत्तिरनन्ता ।
तिब्वृत्तिर्दशधा दशलकारीभेदात् । नान्तः शब्दराशेः ३२
वाक्यम् वैभक्तम्, शाक्तं च शक्ति-विभक्तिमयम् ३
वाक्यं दशधा ३३
गुणवदलङ्कृतं च वाक्यमेव काव्यम् ३५
असत्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यम् ३५
नासत्यं नाम किञ्चन काव्ये अर्थवादरूपे ३६
अल्पीयांसः शब्दाः । भूयिष्ठा अपशब्दाः । शब्देभ्यः धर्मः,
अपशब्देभ्यश्च अधर्मः । ३७
असदर्थाभिधायकत्वान्नोपदेष्टव्यं काव्यम् । ३७
प्रक्रमापन्नो निबन्धनीय एवेति यायावरीयः । ३८

**सप्तमोऽध्यायः - वाक्यभेदाः** ३९-४५
वाक्यं वचनमिति व्याहारः ३९
वाक्यं त्रिधा ब्राह्मं शैवं, वैष्णवमिति ३९
वायुप्रोक्तपुराणादिभ्य उपलब्धं पञ्चधा । ३९-४२
काकुर्द्विधा- साकाङ्क्षा वाक्यात् पूर्वम्, साकाङ्क्षा त्रिधा ४१
निराकाङ्क्षाऽपि त्रिधा ४१
काकवोऽनन्ताः ४२
अभ्युपगमानुनयकाकुः,अभ्यनुज्ञोपहासकाकुः,त्रिचतुरयोगकाकुः ४३
पाठव्यवस्था ४३-४५

**अष्टमोऽध्यायः - काव्यार्थयोनयः** ४६-५२
द्वादशधा वाक्यार्थः ४६
षोडशधेति यायावरीयः ४९-५२

**नवमोऽध्यायः - अर्थव्याप्तिः** ५३-५९
अर्थस्त्रिधेति द्रौहिणिः सप्तधेति यायावरीयः ५३

**दशमोऽध्यायः - कविचर्या राजचर्या च** ६०-६५
कवेर्भभवनम् कवि-परिकरः ६०,
काव्य-रक्षा ६१
कवेर्दिनचर्या कालनियमः (प्रहरनियमः) ६२
कविप्रकाराः- पुरुषकविः, योषित्कविः ६३
प्रबन्धभेदाः सिद्धं प्रबन्धमनेकादर्शगतं कुर्यात् ६३
प्रबन्धविनाशकारणानि- 'वाक्तत्त्वमुन्मिषति कस्यचिदेव पुंसः' ६४
राजचर्या- राजा कविः कविसमाजं विदधीत ६४
कवयः यथास्थानमुपविष्टाः स्युः। सभ्यास्तुष्टपुष्टा भवेयुः। ६५
ब्रह्मसभाः काव्यशास्त्र-परीक्षार्थं प्रतिनगरं भवेयुः ६५
कवि परीक्षा ६५
शास्त्रपरीक्षा ६६

**एकादशोऽध्यायः- शब्दहरणम्** ६६-७१
शब्दहरणविधाः ६६

**द्वादशोऽध्यायः- शब्दार्थहरणेषु कविप्रभेदाः** ७२-७८
कविप्रभेदाः मतिदर्पणे कवीनां विश्वं प्रतिफलति ७२
अर्थत्रैविध्यम्- १ अन्ययोनिः, २ निह्नुतयोनिः ३ अयोनिश्च ७२
एतेषां द्वात्रिंशद् भेदाः ७३-७८
अन्ययोनिः - प्रतिबिम्बकल्पः आलेख्यप्रख्यश्च ७३

निह्नुतयोनिः - तुल्यदेहितुल्यः परपुरप्रवेशसदृशश्च ७३
अयोनिः - एकविधः तस्य अर्थस्त्रिविधः -
लौकिकालौकिकमिश्रभेदात् ७४
पञ्चविधाः कवयः भ्रामकचुम्बकादिभेदात् ७४
**त्रयोदशोऽध्यायः - अर्थहरणेष्वालेख्यप्रख्यादिभेदाः ७९-८९**
**चतुर्दशोऽध्यायः - जातिद्रव्यक्रियासमयस्थापना ९०-९४**
कविसमयाः ९०
नदीपद्मानि, सलिलमात्रे हंसाः ९२
समयनियमाः ताम्रपर्ण्यामेव मौक्तिकाः ९२
मुष्टिग्राह्यत्वम्, सूचीभेद्यत्वम् ९२
द्रव्यनियमाः ९३
**पञ्चदशोऽध्यायः - गुणसमयस्थापना ९५-९८**
यशःशौक्यम्, पापकार्ष्ण्यम् ९५
**षोडशोऽध्यायः - स्वर्ग्यपातालीयकविरहस्यस्थापना ९९-१०२**
चन्द्रमसि शशहरिणयोरैक्यम्, कामकेतने मकरमत्स्ययोरैक्यं ९९
अत्रिनेत्रसमुद्रोत्पन्नचन्द्रयोरैक्यम् , बहुकालजन्मनोऽपि
शिवचन्द्रमसो बालत्वम, कामस्य मूर्त्तत्वं,
द्वादशानामप्यादित्यानामैक्यम्, नारायणमाधवयोश्च ऐक्यम् १००
दामोदरशेषकूर्मादेः कमलासम्पदोश्च ऐक्यम्,
नागसर्पयोरैक्यम् , दैत्यदानवासुराणामैक्यम् १०१
**सप्तदशोऽध्यायः - देशविभागः १०३-११२**
एकं जगत्, त्रीणि जगन्ति, सप्त १०३
चतुर्दश १०४
एकविंशति १०४
चक्रवर्त्तित्वम् १०६
पूर्वदेशः, उत्तरादिदेशाः १०७
दिशः १०८
**अष्टादशोऽध्यायः** कालविभागः **११३-१२७**
कालमानानि, वर्षादयः षड्ऋतवः ११३
**परिशिष्टानि १२९-१७२**
१. श्लोकानुक्रमसूची १२९
२. उल्लिखिता आचार्याः १३९
३. काव्यमीमांसाकोषः १४१

०००

## काव्यमीमांसायाः सप्तदशेऽध्याये भूगोलः

**आर्यावर्त्तः** पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तर**मार्यावर्त्तः**।

### (१) वाराणस्याः पुरतः पूर्वदेशः

**१.१ देशाः** - अङ्गः, कलिङ्गः, कोसलाः, तोसलाः, उत्कलाः, मगधाः,मुद्गराः, विदेहाः, नेपालः, पुण्ड्राः, प्राग्ज्योतिषः, ताम्रलिप्तकाः, मलदाः, मल्लवर्त्तकाः,सुह्माः, ब्रह्मोत्तराद्याः।

**१.२ पर्वताः** - बृहद्गृहः, लोहितगिरिः, चकोरपर्वतः, दर्दुरः, नेपालः, कामरूपाद्याः।

**१.३ सरितः** - शोणः, लौहित्यः, गङ्गा, करतोया, कापिशाद्याः।

**१.४ उत्पादाः** - लवली, ग्रन्थिपर्णकः, अगरुः, द्राक्षाः, कस्तूरिका ।

### (२) माहिष्मत्याः पुरतः दक्षिणापथः

**२.१ देशाः** - महाराष्ट्रम्, माहिषकम्, अश्मकम्, विदर्भः, कुन्तलः, क्रथकैशिकम्, सूर्पारकम्, काञ्ची, केरलाः, कावेराः, मुरलाः, वानवासकाः, सिंहलाः, चोलाः, दण्डकाः, पाण्ड्याः, पल्लवाः, गाङ्गः, नाशिक्याः, कौङ्कणाः, कोल्लगिरिः, वल्लार-प्रभृतयः।

**२.२ पर्वताः** - विन्ध्यगिरिः(दक्षिणपादः), महेन्द्रः, मलयः, मेक/खलः, पालगिरिः, मञ्जरगिरिः, सह्यगिरिः, श्रीपर्वत-प्रभृतयः ।

**२.३ सरितः** - नर्मदा, तापी, पयोष्णी, गोदावरी, कावेरी, भैमरथी, वेणा, कृष्णवेणा, वञ्जुरा, तुङ्गभद्रा, ताम्रपर्णी, उत्पलावती, रावणगङ्गाद्या नद्यः।

**२.४ उत्पादाः** - मलयक्षेत्रगता एव ।

### (३) देवसभातः पश्चादवर्त्तिनः

**३.१ देशाः** - देवसभाः(देवासः), सुराष्ट्राः, दशेरकाः, त्रवणाः, भृगुकच्छाः, कच्छीयाः,आनर्त्ताः, अर्बुदाः, ब्राह्मणवाहाः, यवनद्याः ।

**३.२ पर्वताः** - गोवर्धनः, गिरिनारः, देवसभः, माल्यशिखरः, अर्बुदः।

**३.३ सरितः** - सरस्वती, श्वभ्रवती, वार्त्तघ्नी, मही, हिडिम्बाद्याः।

**३.४ उत्पाद्याः** - करीरम् , पीलुः, गुग्गुलुः, खर्जूराः, करभप्रभृतयः।

### (४) पृथूदकेभ्यः उपरि उत्तरापथः

**४.१ देशाः** - शकाः, केकयाः, वोक्कालाः, हूणाः, वाणायुजः, काम्बोजाः, वाह्लीकाः, वह्लवाः, लिम्पाकाः, बर्बराः, हरहूराः, हूहुकाः, सहुडाः, हंसमार्गाः, रमठाः, करकण्ठप्रभृतयः।

**४.२ पर्वताः** - हिमालयः, कलिन्दः, इन्द्रकीलः, चन्द्राचलादयः।

**४.३ सरितः** - गङ्गा, सिन्धुः, सरस्वती, शतद्रुः, चन्द्रभागा, यमुना, इरावती, वितस्ता, विपाशा, कुहूः, देविकादयः।

**४.४ उत्पादाः** - सरलाः, देवदारवः, द्राक्षा, कुङ्कुमम् , चमराः, अजिनम् , सौवीरम् , स्रोतोऽञ्जनम् , सैन्धवम् , वैदूर्यम् , तुरङ्गादयः।

### (५) मध्यदेशः - शास्त्रनिर्दिष्टः प्रसिद्धश्च

तेषां मध्ये **मध्यदेश** इति कविव्यवहारः। न चाऽयं नानुगन्ता शास्त्रार्थस्य।यदाहुः-

**हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ।।७.२५।।**

तत्र च ये देश-पर्वत-सरिदुत्पादाश्च तत् प्रसिद्धि-सिद्धमिति न निर्दिष्टम् ।

**द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा ।**
**नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ।।७.२६।।**

### (६) अन्तर्वेदी (गङ्गायमुनयोश्चान्तरम्)

'विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरम**न्तर्वेदी** । तदपेक्षया दिशो विभजेत' इति आचार्याः । तत्रापि **महोदयं** (कन्नौजनगरं) मूलमवधीकृत्य इति यायावरीयः ।

### (७) दश दिशः

'ऐन्द्री, आग्नेयी, याम्या, नेर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी चाष्टौ दिश' इत्येके । तदाहुः-

**एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-**
**र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।**
**युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-**
**र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितानां शतानि ।।७.२८।।**

'ब्राह्मी नागीया च द्वे ताभ्यां सह दशैता' इत्यपरे ।

०००

॥ॐ॥

सनातनकवि-**रेवाप्रसादद्विवेदि**सम्पादिता

कविराज-**राजशेखर**-कृता

# काव्यमीमांसा

## प्रथमोऽध्यायः

### शास्त्रसङ्ग्रहः

अथातः काव्यं मीमांसिष्यामहे यथोपदिदेश **श्रीकण्ठः** परमेष्ठि-**वैकुण्ठा**दिभ्यश्चतुःषष्टये शिष्येभ्यः, सोऽपि भगवान् **स्वयम्भू**रिच्छाजन्मभ्यः स्वान्तेवासिभ्यः। तेषु सारस्वतेयो वृन्दीयसामपि वन्द्यः **काव्यपुरुष** आसीत्। तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भूवस्स्वस्त्रितयवर्त्तिनीषु प्रजासु हितकाम्यया **प्रजापतिः काव्यविद्या**प्रवर्त्तनायै प्रायुङ्क्त। सोऽष्टादशाधिकरणीं दिव्येभ्यः **काव्यविद्यास्नातकेभ्यः** सप्रपञ्चं प्रोवाच।

तत्र कविरहस्यं **सहस्राक्षः** समाम्नासीत्, औक्तिक**मुक्तिगर्भः**, रीतिनिर्णयं **सुवर्णनाभः**, आनुप्रासिकं **प्रचेताः**, यमकानि **यमः**, चित्रं **चित्राङ्गदः**, शब्दश्लेषं **शेषः**, वास्तवं **पुलस्त्यः**, औपम्य**मौपकायनः**, अतिशयं **पाराशरः**, अर्थश्लेषम् **उतथ्यः**, उभयालङ्कारिकं **कुबेरः**, वैनोदिकं **कामदेवः**, रूपकनिरूपणीयं **भरतः**, रसाधिकारिकं **नन्दिकेश्वरः**, दोषाधिकरणं **धिषणः**, गुणौपादानिकम् **उपमन्युः**, औपनिषदिकं **कुचुमारः**-इति। ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः।

इत्थङ्कारञ्च प्रकीर्णत्वात् सा किञ्चिदुच्चिच्छिदे। इतीयं प्रयोजकाङ्गवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशाधिकरणी प्रणीता।

तस्या अयं प्रकरणाधिकरणसमुद्देशः[१]। शास्त्रसङ्ग्रहः, शास्त्रनिर्देशः,

---

१. अत्रोद्देशान् प्रतिनिर्देशा नानुहरन्ति। अवधानमत्रापेक्ष्यते।

काव्यपुरुषोत्पत्तिः, पदवाक्यविवेकः, पाठप्रतिष्ठा, अर्थानुशासनं, वाक्यविधयः, कविविशेषः, कविचर्या, राजचर्या, काकुप्रकाराः, शब्दार्थहरणोपायाः, कविसमयः, देशकालविभागः, भुवनकोश इति कविरहस्यं प्रथममधिकरणमित्यादि । इति सूत्राणि । अथैतेषां व्याख्याभाष्यं भविष्यति ।

**समासव्यासविन्यासः सैष शिष्यहिताय नः ।**
**चित्रोदाहरणैर्गुर्वी ग्रन्थेन तु लघीयसी ।।१।।**

**इयं नः काव्यमीमांसा काव्यव्युत्पत्तिकारणम् ।**
**इयं सा काव्यमीमांसा मीमांस्यो यत्र वाग्लवः ।।२।।**

**वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ।**

**यायावरीयः सङ्क्षिप्य मुनीनां मतविस्तरम् ।**
**व्याकरोत् काव्यमीमांसां कविभ्यो राजशेखरः ।।३।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
**प्रथमो**ऽध्यायः शास्त्रसङ्ग्रहः ।।१।।

०००

# द्वितीयोऽध्यायः

## शास्त्रनिर्देशः

इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च। शास्त्रपूर्वकत्वात् काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत। नह्यप्रवर्त्तितप्रदीपास्तमसि तत्त्वार्थसार्थमध्यक्षयन्ति।

तच्च द्विधा-अपौरुषेयं पोरुषेयं च। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मण। विवृतक्रियातन्त्रा मन्त्राः। मन्त्राणां स्तुतिनिन्दाविनियोगग्रन्थो ब्राह्मणम्।

ऋग्यजुःसामवेदास्त्रयी। अथर्वणश्च तुरीयः। तत्रार्थव्यवस्थितपादा ऋचः। ताः सं(स)गीतयः सामानि। अच्छन्दांस्यगीतानि यजूंषि। ऋचो

१. यजूंषि सामानि चाथर्वणं त इमे चत्वारो वेदाः।

२. इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः। 'वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो गेयवेदः' इति द्रौहिणिः।

३. 'शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्यौतिषं च षडङ्गानि' इत्याचार्याः। **'उपकारकत्वादलङ्कारः सप्तममङ्गम्'** इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद् वेदार्थानवगतिः। यथा-

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**<br>**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥१॥**

सेयं शास्त्रोक्तिः। प्रत्यधिकरणं च ऋचं यजुः सामाथर्वणं ब्राह्मणं चोदाहृत्य भाषामुदाहरिष्यामः।

४. तत्र वर्णानां स्थानकरणप्रयत्नादिभिः निष्पत्तिनिर्णायिनी **शिक्षा आपिशलीय**ादिका।

५. नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं **कल्पः**। स च यजुर्विद्या।

६. शब्दानामन्वाख्यानं **व्याकरणम्**।

७. निर्वचनं **निरुक्तम्**। छन्दसां प्रतिपादयित्री **छन्दोविचितिः**।

८. ग्रहगणितं **ज्यौतिषम्**। अलङ्कारव्याख्यानं तु पुरस्तात्।

९-१०. पौरुषेयं तु- पुराणम्, आन्वीक्षिकी, मीमांसा, स्मृतितन्त्रमिति चत्वारि शास्त्राणि।

१०. तत्र वेदाख्यानोपनिबन्धनप्रायं **पुराण**मष्टादशधा । यदाहुः-

**सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशविधिः ।**
**जगतो यत्र निबद्धं तद् विज्ञेयं पुराणमिति ।।२।।**

११. 'पुराणप्रविभेद एवेतिहासः' इत्येके । स च द्विधा परिक्रिया-पुराकल्पाभ्याम् । यदाहुः -

**परिक्रिया पुराकल्प इतिहासगतिर्द्विधा ।**
**स्यादेकनायका पूर्वा द्वितीया बहुनायका ।।३।।**

तत्र रामायणं भारतं चोदाहरणे ।

१२. **आन्वीक्षिकीं** तु विद्यावसरे वक्ष्यामः ।

१३. निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री **मीमांसा** । सा च द्विविधा विधिविवेचनी ब्रह्मनिदर्शनी च ।

१४. अष्टादशैव श्रुत्यर्थस्मरणात् **स्मृतयः** । 'तानीमानि चतुर्दश विद्यास्थानानि, यदुत वेदाश्चत्वारः, षडङ्गानि, चत्वारि शास्त्राणि' इत्याचार्याः । तान्येतानि कृत्स्नामपि भूर्भुवःस्वस्त्रयीं व्यासज्य वर्त्तन्ते । तदाहुः-

**विद्यास्थानानां गन्तुमन्तं न शक्तो**
**जीवेद् वर्षाणां योऽपि साग्रं सहस्रम् ।**
**तस्मात् सङ्क्षेपादर्थसन्दोह उक्तो**
**व्यासः सन्त्यक्तो ग्रन्थभीरुप्रियार्थम् ।।४।।**

'सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्' - इति यायावरीयः। गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च। तद्धि शास्त्राण्यनुधावन्ति ।

१५-१८.'वार्त्ता कामसूत्रं शिल्पिशास्त्रं दण्डनीतिरिति पूर्वैः सहाष्टादश विद्यास्थानानि' इत्यपरे ।

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः । 'दण्डनीतिरेवैका विद्या' इत्यौ**शनसाः** । दण्डभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते । 'वार्त्ता दण्डनीतिर्द्वे विद्ये' इति बार्हस्पत्याः वृत्तिर्विनयग्रहणं च स्थितिहेतुर्लोकयात्रायाः । 'त्रयीवार्त्तादण्डनीतयस्तिस्रो विद्याः' इति **मानवाः** । त्रयी हि वार्त्तादण्डनीत्योरुपदेष्ट्री । 'आन्वीक्षिकी त्रयी वार्त्तादण्डनीत- यश्चतस्रो विद्या' इति **कौटिल्यः** । आन्वीक्षिक्या हि विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवति ।

**'पञ्चमी साहित्यविद्या'** इति यायावरीयः । सा हि चतसृणामपि विद्यानां निष्यन्दः । आभिर्धर्मार्थौ यद् विद्यात् तद् विद्यानां विद्यात्वम् ।

तत्र त्रयी व्याख्याता । द्विधा चान्वीक्षिकी पूर्वोत्तरपक्षाभ्याम् । अर्हद्भदन्तदर्शने लोकायतं च पूर्वः पक्षः । साङ्ख्यं न्यायवैशेषिकौ चोत्तरः। त इमे **षट् तर्काः**। तत्र च तिस्रः कथा भवन्ति वादो, जल्पो वितण्डा च ।

मध्यस्थयोस्तत्त्वावबोधाय वस्तुतत्त्वपरामर्शो **वादः** ।

विजिगीषोः स्वपक्षसिद्धये छलजातिनिग्रहादिपरिग्रहो **जल्पः** ।

स्वपक्षस्यापरिग्रहित्री परपक्षस्य दूषयित्री **वितण्डा** ।

कृषिपाशुपाल्ये वाणिज्या च **वार्त्ता** ।

आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डस्तस्य नीति**र्दण्डनीतिः** ।

तस्यामायत्ता लोकयात्रेति शास्त्राणि । सामान्यलक्षणं चैषाम् -

**सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः ।**
**ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः ।।५।।**

सूत्रादिभिश्चैषां प्रणयनम् । तत्र सूत्रणात् **सूत्रम्** । यदाहुः-

**अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम् ।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः ।।६।।**

सूत्राणां सकलसारविवरणं **वृत्तिः** । सूत्रवृत्तिविवेचनं **पद्धतिः** । आक्षिप्य भाषणाद् **भाष्यम्** । अन्तर्भाष्यं **समीक्षा**, अवान्तरार्थविच्छेदश्च सा । यथासम्भवमर्थस्य टीकनं **टीका** । विषमपदभञ्जिका **पञ्जिका** । अर्थप्रदर्शनकारिका **कारिका** । उक्तानुक्तदुरुक्तचिन्ता **वार्त्तिक**मिति शास्त्रभेदाः।

**भवति प्रथयन्नर्थं लीनं समभिप्लुतं स्फुटीकुर्वन् ।**
**अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः ।।७।।**

शास्त्रैकदेशस्य प्रक्रिया **प्रकरणम्** । **अध्याया**दयस्त्ववान्तर-विच्छेदाः । कृतिभिः स्वतन्त्रतया प्रणीता इत्यपरिसङ्ख्येया अनाख्येयाश्च ।

**शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या ।**

उपविद्यास्तु चतुःषष्टिः । ताश्च कला इति विदग्धवादः । स आजीवः काव्यस्य । तमौपनिषदिके वक्ष्यामः ।

**इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः ।**
**त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात् ।।८।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
द्वितीयोऽध्यायः शास्त्रनिर्देशः ।।२।।

०००

# तृतीयोऽध्यायः

## काव्यपुरुषोत्पत्तिः

एवं गुरुभ्यो गिरः पुण्याः पुराणीः शृणुमः स्म, यत्किल धिषणं शिष्याः कथाप्रसङ्गे पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुः ?-इति । स तान् बृहताम्पतिरूचे ।

पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास । प्रीतेन मनसा तां **विरिञ्चः** प्रोवाच-पुत्रं ते सृजामि ।

अथैषा काव्यपुरुषं सुषुवे । सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत् -

**यदेतद् वाङ्मयं विश्वमर्थमूर्त्त्या विवर्त्तते ।**
**सोऽस्मि काव्यपुमानम्ब ! पादौ वन्देय तावकौ ।।१।।**

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससम्मद-मङ्कपर्यङ्केनादाय तमुदलापयत् । "वत्स, सच्छन्दस्काया गिरःप्रणेतर्वाङ्-मयमातरमपि मातरं मां विजयसे । प्रशस्यतमं चेदमुदाहरन्ति यदुत पुत्रात् पराजयो द्वितीयं पुत्रजन्म' इति । त्वत्तः पूर्वे हि विद्वांसो गद्यं ददृशुर्न पद्यम् । त्वदुपज्ञमथातः छन्दस्वद् वचः प्रवर्त्स्यति । अहो श्लाघनीयोऽसि ।"

**"शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम् । समः प्रसन्नो मधुर उदार ओजस्वी चासि । उक्तिचणं च ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लिकादिकं च वाक्केलिः, अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति। भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिस्तौति -"**

**चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्त्यानाविवेश ।।२।।**

'तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचितं चेष्टस्व ।

इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातु-**मभ्रगङ्गां** जगाम ।

**क.** तावच्च कुशान् समिधश्च समाहर्त्तुं निःसृतो महामुनि**रुशनाः** परिवृत्ते पूषण्यूष्मोपप्लुतं तमद्राक्षीत् । कस्यायमनाथो बाल इति चिन्तयन् स्वमाश्रमपदमनैषीत् ।
क्षणादाश्वस्तश्च स **सारस्वतेय**स्तस्मै छन्दस्वतीं वाचं समचारयत् । अकस्माद् विस्मापयन् स चाभ्युवाच ।

**या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम् ।**
**हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती ।।३।।** - इति तत्पूर्वकमध्येतॄणां च सुमेधस्त्वमादिदेश । ततः प्रभृति तमुशनसं सन्तः कविरित्याचक्षते । तदुपचाराच्च कवयः कवय इति लोकयात्रा। कविशब्दश्च 'कवृ वर्णे' इत्यस्य धातोः काव्यकर्मणो रूपम् । काव्यैकरूपत्वाच्च सारस्वतेयेऽपि **काव्यपुरुष** इति **भक्त्या** प्रयुञ्जते ।

**ख.** ततश्च विनिवृत्ता **वाग्देवी** तत्र पुत्रमपश्यन्ती मध्येहृदयं चक्रन्द । प्रसङ्गागतश्च **वाल्मीकि**र्मुनिवृषा सप्रश्रयं तमुदन्तमुदाहृत्य भगवत्यै **भृगुसूते**राश्रम-पदमदर्शयत् ।

**ग.** सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि च चुम्बन्ती स्वस्तिमता चेतसा **प्राचेतसा**याऽपि महर्षये निभृतं सच्छन्दांसि वचांसि प्रायच्छत्।

**घ.** अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुण-क्रेङ्कारया गिरा क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद -

**मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।४।।**

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात्, 'यदुतान्यदनधीयानो यः प्रथममेनमध्येष्यते स **सारस्वतः** कविः सम्पत्स्यत' इति।

**ङ.** स तु **महामुनिः** प्रवृत्तवचनो रामायणमितिहासं समदृभत् । **द्वैपायन**स्तु श्लोकप्रथमाध्यायी तत्प्रभावेन शतसाहस्रीं संहितां भारतम् ।

**च.** एकदा तु ब्रह्मर्षिवृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान्देवः स्वयम्भूस्तामिमां निर्णेत्रीमुद्दिदेश । उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज । वत्स, **परमेष्ठि**नाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठान्न्यवर्त्तयदेनमात्मना तु प्रववृते ।

**छ.** ततः स काव्यपुरुषो रुषा निश्चक्राम । प्रियं मित्रमस्य च **कुमारः** साक्रन्दं रुदन्नभ्यधीयत गौर्या-तात, तूष्णीमास्स्व, साऽहमेषा निषेधामीति निगदन्ती

समचिन्तयत् । प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति, तदेतस्य वशीकरणं कामपि स्त्रियं सृजामीति विचिन्तयन्ती **साहित्यविद्या**-वधूमुदपादयद् आदिशच्चैनामेष ते रुषा धर्मपतिः पुरः प्रतिष्ठते, तदनुवर्त्तस्वैनं निवर्त्तय च । भवन्तोऽपि हन्त मुनयः काव्यविद्या-स्नातकाश्चरितमेतयोः स्तुध्वम् । एतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती **भवानी** जोषमासिष्ट । तेऽपि तथा कर्त्तुमवतस्थिरे ।

**ज.** अथ सर्वे प्रथमं **प्राचीं दिशं** शिश्रियुर्यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जन-पदाः । तत्राऽभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट स तत्रत्याभिः स्त्रीभिरन्वक्रियत । सा प्रवृत्ति**रौड्रमागधी** । तां ते मुनयोऽभितुष्टुवुः -

**आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः**
**सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः ।**
**दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद्**
**गौडाङ्गनासु चिरमेष चकास्तु वेषः ।।५।।**

**झ.** यदृच्छयाऽपि यादृङ्नेपथ्यः स **सारस्वतेय** आसीत् तद्वेषाश्च पुरुषा बभूवुः । साऽपि सैव प्रवृत्तिः । यदपरं नृत्तवाद्यादिकमेषा चक्रे सा **भारती वृत्तिः** । तां ते मुनय इति समानं पूर्वेण ।

**ञ.** तथाविधाकल्पयापि तया यदवशंवदीकृतः समासवदनुप्रासवद् **योगवृत्तिपरम्परा**गर्भं जगाद सा **गौडीया रीतिः** । तां ते मुनय इति समानं पूर्वेण ।

वृत्तिरीतिस्वरूपं यथाऽवसरं वक्ष्यामः ।

**ट.** ततश्च स **पाञ्चालान्** प्रत्युच्चचाल यत्र पाञ्चालशूरसेनहस्तिनापुर-काश्मीरवाहीकबाह्लीकवाह्लवेयादयो जनपदाः । तत्राऽभियुञ्जाना तमौमेयीति-समानं पूर्वेण । सा **पाञ्चालमध्यमा प्रवृत्तिः** । तां ते मुनयोऽभितुष्टुवुः-

**ताटङ्कवल्गनतरङ्गितगण्डलेख-**
**मानाभिलम्बिदरदोलिततारहारम् ।**
**आश्रोणिगुल्फपरिमण्डलितान्तरीयं**
**वेषं नमस्यत महोदयसुन्दरीणाम् ।।६।।**

**ठ.** किञ्चिदार्द्रितमना यन्नेपथ्यः स सारस्वतेय आसीदिति समानं पूर्वेण । सापि यदीषन्नृत्तगीतवाद्यविलासादिकं दर्शयाम्बभूव सा सात्त्वती वृत्तिः । आविद्धगतिमत्त्वात् सा चारभटी । तां ते मुनय इति समानं पूर्वेण ।

तथाविधाकल्पयापि तया यदीषद् वशंवदीकृत ईषदसमासं ईषदनुप्रासमुपचारगर्भञ्च जगाद सा पाञ्चाली रीतिः । तां ते मुनय इति समानं पूर्वेण ।

**ड.** ततः **सोऽवन्तीन्** प्रत्युच्चचाल यत्रावन्तीवैदिशसुराष्ट्रमालवार्बुदभृगुकच्छादयो जनपदाः । तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण । सा **प्रवृत्तिरावन्ती** पाञ्चालमध्यमादाक्षिणात्ययोरन्तरचारिणी हि सा । अत एव **सात्त्वतीकैशिक्यौ** तत्र वृत्ती । तां ते मुनयोऽभितुष्टुवुः-

**पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः ।**
**यज्जल्पितं यच्चरितादिकं तदन्योन्यसम्भिन्नमवन्तिदेशे ।।७।।**

**ढ.** ततश्च स **दक्षिणां दिशमाससाद** यत्र मलयमेकलकुन्तलकेरलपालमञ्जरमहाराष्ट्रवङ्गकलिङ्गादयो जनपदाः । तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण । सा **दाक्षिणात्या प्रवृत्तिः** । तां ते मुनयोऽभितुष्टुवुः -

**आमूलतो वलितकुन्तलचारुचूड-**
**श्चूर्णालकप्रचयलाञ्छितभालभागः ।**
**कक्षानिवेशनिबिडीकृतनीविरेष**
**वेषश्चिरं जयति केरलकामिनीनाम् ।।८।।**

**ण.** तामनुरक्तमनाः स यन्नेपथ्यः **सारस्वतेय** आसीदिति समानं पूर्वेण । सापि यद् विचित्रनृत्तगीतवाद्यविलासादिकमाविर्भावयामास सा **कैशिकीवृत्तिस्तां** ते मुनय इति समानं पूर्वेण । यदत्यर्थं च स तया वशंवदीकृतः स्थानानुप्रासवदसमासं **योगवृत्तिगर्भञ्च** जगाद सा **वैदर्भी** रीतिः । तां ते मुनय इति समानं पूर्वेण । तत्र **वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः ।**

**त.** 'चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च, देशानां पुनरानन्त्यं तत्कथमिव कात्स्न्येंन परिग्रहः' इत्याचार्याः । अनन्तानपि हि देशांश्चतुर्धैवाकल्प्य कल्पयन्ति । **'चक्रवर्त्तिक्षेत्रं** सामान्येन तदवान्तरविशेषैः पुनरनन्ता एव' इति **यायावरीयः।**

**थ. दक्षिणात् समुद्रादुदीचीं दिशं प्रति योजनसहस्रं चक्रवर्त्तिक्षेत्रं,** तत्रैष नेपथ्यविधिः । ततः परं दिव्याद्या अपि यं देशमधिवसेयुस्तद्देश्यं वेषमाश्रयन्तो निबन्धनीयाः । स्वभूमौ तु कामचारः । द्वीपान्तरभवानां तदनुसारेण वृत्तिप्रवृत्ती ।

रीतयस्तु तिस्रस्तास्तु पुरस्तात् ।

तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु **वत्सगुल्मं** नाम नगरम्।

तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत्परिणिनाय ।

**द.** ततस्तद् वधूवरं विनिवृत्त्य तेषु प्रदेशेषु विहरमाणं तुषारगिरि-मेवाजगाम, यत्र गौरी सरस्वती च मिथः सम्बन्धिन्यौ तस्थतुः । तौ च कृतवन्दनौ दम्पती दत्त्वाशिषं प्रभावमयेन वपुषा कविमानसनिवासिनौ चक्रतुः ।

**ध.** तयोश्च कविलोकस्वर्गसर्गंतमकल्पतां, यत्र काव्यमयेन शरीरेण मर्त्यमधिवसन्तो दिव्येन देहेन कवय आकल्पं मोदन्ते ।

**इत्येष काव्यपुरुषः पुरा सृष्टः स्वयम्भुवा ।**
**एवं विभज्य जानानः प्रेत्य चेह च नन्दति ।।९।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
**तृतीयो**ऽध्यायः **काव्यपुरुषो**त्पत्तिः ।।३।।

०००

# चतुर्थोऽध्यायः

## शिष्याः कविभेदाश्च

द्विविधं शिष्यमाचक्षते यदुत बुद्धिमानाहार्यबुद्धिश्च ।

१. यस्य निसर्गतः शास्त्रमनुधावति बुद्धिः स बुद्धिमान् ।

२. यस्य च शास्त्राभ्यासः संस्कुरुते बुद्धिमसावाहार्यबुद्धिः ।

३. त्रिधा च सा-स्मृतिर्मतिः प्रज्ञेति । अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः । वर्त्तमानस्य मन्त्री मतिः । अनागतस्य प्रज्ञात्री प्रज्ञेति । सा त्रिप्रकाराऽपि कवीनामुपकर्त्री ।

४ तयोर्बुद्धिमान् शुश्रूषते शृणोति गृह्णीते धारयति विजानात्यूहतेऽ-पोहति तत्त्वं चाभिनिविशते ।

५. आहार्यबुद्धेरप्येत एव गुणाः, किन्तु प्रशास्तारमपेक्षन्ते । अहरहः सुगुरूपासना तयोः प्रकृष्टो गुणः । सा हि बुद्धिविकासकामधेनुः । तदाहुः -

**प्रथयति पुरः प्रज्ञाज्योतिर्यथार्थपरिग्रहे**
**तदनु जनयत्यूहापोहक्रियाविशदं मनः ।**
**अभिनिविशते तस्मात्तत्त्वं तदेकमुखोदयं**
**सह परिचयो विद्यावृद्धैः क्रमादमृतायते ।।१।।**

६-९. ताभ्यामन्यथाबुद्धिर्दुर्बुद्धिः । तत्र बुद्धिमतः प्रतिपत्तिः । स खलु सकृदभिधानप्रतिपन्नार्थः कविमार्गं मृगयितुं गुरुकुलमुपासीत । आहार्यबुद्धेस्तु द्वयमप्रतिपत्तिः सन्देहश्च । स खल्वप्रतिन्नमर्थं प्रतिपत्तुं सन्देहं च निराकर्त्तुमाचार्यानुपतिष्ठेत ।

१०. दुर्बुद्धेस्तु सर्वत्र मतिविपर्यास एव । स हि नीलीमेचकितसिचय-कल्पोऽनाधेयगुणान्तरत्वात् तं यदि सारस्वतोऽनुभावः प्रसादयति तमौपनिषदिके वक्ष्यामः ।

११. 'काव्यकर्मणि कवेः समाधिः परं व्याप्रियते' इति **श्यामदेवः** । मनस एकाग्रता समाधिः । समाहितं चित्तमर्थान्पश्यति । उक्तञ्च-

**सारस्वतं किमपि तत् सुमहारहस्यं**
**यद्गोचरे च विदुषां निपुणैकसेव्यम् ।**
**तत्सिद्धये परमयं परमोऽभ्युपायो**
**यच्चेतसो विदिततवेद्यविधेः समाधिः ।।२।।**

१२. 'अभ्यास:' इति **मङ्गलः** । अविच्छेदेन शीलनमभ्यास: । स हि सर्वगामी सर्वत्र निरतिशयं कौशलमाधत्ते ।

१३. समाधिरान्तर: प्रयत्नो बाह्यस्त्वभ्यास: । तावुभावपि शक्तिमुद्भासयत:।

१४. 'सा केवलं काव्ये हेतु:' इति **यायावरीयः** ।

१५-१६.विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम् । शक्तिकर्त्तृके हि प्रतिभा-व्युत्पत्तिकर्मणी । शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते । **या शब्दग्राममर्थ-सार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा** । अप्रतिभस्य पदार्थसार्थ: परोक्ष इव, प्रतिभावत: पुनरपश्यतोऽपि प्रत्यक्ष इव । यतो **मेधाविरुद्रकुमारदासादयो** जात्यन्धा: कवय: श्रूयन्ते ।

किञ्चन महाकवयोऽपि देशद्वीपान्तरकथापुरुषादिदर्शनेन तत्रस्थां

१७. व्यवहृतिं निबध्नन्ति स्म । तत्र देशान्तरव्यवहार:-

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।**
**ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो**
**यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ।।३।।**

१८. द्वीपान्तरव्यवहार: -

**अनेन सार्द्धं विहराम्बुराशे-**
**स्तीरेषु तालीवनमर्मरेषु ।**
**द्वीपान्तरानीतलवङ्गपुष्पै-**
**रपाकृतस्वेदलवा मरुद्भिः ।।४।।**

१९. कथापुरुषव्यवहार: -

**हरोऽपि तावत् परिवृत्तधैर्य-**
**श्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे**
**व्यापारयामास विलोचनानि ।।५।।**

**तथागतायां परिहासपूर्वं**
**सख्यां सखी वेत्रभृदाबभाषे ।**
**बाले व्रजामोऽन्यत इत्यथैनां**
**वधूरसूयाकुटिलं ददर्श ।।६।।**

२०-२२.सा च द्विधा **कारयित्री भावयित्री** च । कवेरुपकुर्वाणा कारयित्री। साऽपि त्रिविधा सहजाऽऽहार्यौपदेशिकी च । जन्मान्तरसंस्कारापेक्षिणी **सहजा**। जन्मसंस्कारयोनि**राहार्या** । मन्त्रतन्त्राद्युपदेशप्रभवा **औपदेशिकी**। ऐहिकेन कियतापि संस्कारेण प्रथमां तां सहजेति व्यपदिशन्ति । महता पुनराहार्या । औपदेशिक्याः पुनरैहिक एव उपदेशकालः, ऐहिक एव संस्कारकालः ।

त इमे त्रयोऽपि कवयः **सारस्वतः, आभ्यासिकः, औपदेशिकश्च**।

२३-२५.जन्मान्तरसंस्कारप्रवृत्तसरस्वतीको बुद्धिमान् **सारस्वतः** । इहजन्माभ्यासोद्भासितभारतीक आहार्यबुद्धिरा**भ्यासिकः** । उपदेशितदर्शितवाग्विभवो दुर्बुद्धि**रौपदेशिकः** । तस्मान्नेतरौ तन्त्रशेषमनुतिष्ठताम् । 'नहि प्रकृतिमधुरा द्राक्षा फाणितसंस्कारमपेक्षते' इत्याचार्याः । 'न' इति **यायावरीयः** । एकार्थं हि क्रियाद्वयं द्वैगुण्याय सम्पद्यते । 'तेषां पूर्वः पूर्वः श्रेयान्' इति **श्यामदेवः**। यतः-

**सारस्वतः स्वतन्त्रः स्याद् भवेदाभ्यासिको मितः ।**
**उपदेश[१]-कविस्त्वत्र वल्गु फल्गु च जल्पति ।।७।।**

'उत्कर्षः श्रेयान्' इति **यायावरीयः**। स चानेकगुणसन्निपाते भवति। किञ्च -

**बुद्धिमत्त्वं च काव्याङ्गविद्यास्वभ्यासकर्म च ।**
**कवेश्चोपनिषच्छक्तिस्त्रयमेकत्र दुर्लभम् ।।८।।**

**काव्यकाव्याङ्गविद्यासु कृताभ्यासस्य धीमतः ।**
**मन्त्रानुष्ठाननिष्ठस्य नेदिष्ठा कविराजता ।।९।।**

कवीनां तारतम्यतश्चैष प्रायोवादः ।

**एकस्य तिष्ठति कवेर्गृह एव काव्य-**
**मन्यस्य गच्छति सुहृद्भवनानि यावत् ।**
**न्यस्यद्विदग्धवदनेषु पदानि शश्वत्**
**कस्याऽपि सञ्चरति विश्वकुतूहलीव ।।१०।।**

---

१. 'औपदेशिककविः' इति पाठेऽक्षराधिक्यम् ।

सेयं कारयित्री ।

२६. भावकस्योपकुर्वाणा भावयित्री । स हि कवेः श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुः अन्यथा सोऽवकेशी स्यात् । 'कः पुनरनयोर्भेदो यत्कविर्भावयति भावकश्च कविः' इत्याचार्याः । तदाहुः-

**प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा ।**
**भावकस्तु कविः प्रायो न भजत्यधमां दशाम् ।।११।।**

२७. 'न' इति **कालिदासः** । पृथगेव हि कवित्वाद् भावकत्वं, भावकत्वाच्च कवित्वं, स्वरूपभेदाद् विषयभेदाच्च । यदाहुः -

**कश्चिद् वाचं रचयितुमलं श्रोतुमेवापरस्तां**
**कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति ।**
**नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-**
**मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ।।१२।।**

२८-२९.ते च द्विधाऽ**रोचकिनः, सतृणाभ्यवहारिणश्च**' इति **मङ्गलः**। 'कवयोऽपि भवन्ति' इति **वामनीयाः** । 'चतुर्द्धा' इति **यायावरीयः** मत्सरिणस्तत्त्वाभिनिवेशिनश्च ।

३०. 'तत्र विवेकिनः पूर्वे तद्विपरीतास्तु ततोऽनन्तराः' इति **वामनीयाः**।

३१. 'अरोचकिता हि तेषां नैसर्गिकी ज्ञानयोनिर्वा । नैसर्गिकीं हि संस्कारशतेनाऽपि रङ्गमिव कालिकां ते न जहति । ज्ञानयोनौ तु तस्यां विशिष्टज्ञेयवति वचसि रोचकितावृत्तिरेव'' इति **यायावरीयः** ।

किञ्च सतृणाभ्यवहारिता सर्वसाधारणी । तथाहि व्युत्पित्सोः कौतुकिनः सर्वस्य सर्वत्र प्रथमं सा । प्रतिभाविवेकविकलता हि न गुणागुणयोर्विभाग-सूत्रं पातयति । ततो बहु त्यजति बहु च गृह्णति । विवेकानुसारेण हि बुद्धयो मधु निष्यन्दन्ते । परिणामे तु यथार्थदर्शी स्यात् । विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते ।

३२. मत्सरिणस्तु प्रतिभातमपि न प्रतिभातं, परगुणेषु वाचंयमत्वात् । स पुनरमत्सरी ज्ञाता च विरलः । तदुक्तम् -

**कस्त्वं भोः कविरस्मि काप्यभिनवा सूक्तिः सखे पठ्यतां**
**त्यक्ता काव्यकथैव सम्प्रति मया कस्मादिदं श्रूयताम् ।**
**यः सम्यग्विविनक्ति दोषगुणयोः सारं स्वयं सत्कविः**
**सोऽस्मिन् भावक एव नास्त्यथ भवेद्दैवान्न निर्मत्सरः ।।१३।।**

३३. तत्त्वाभिनिवेशी तु मध्येसहस्त्रं यद्येक: । तदुक्तम् -

**शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः**
**सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः ।**
**पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं तायतां**
**केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ।।१४।।**
**स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च ।**
**कवेर्भवति ही चित्रं किं हि तद्यन्न भावकः ।।१५।।**
**काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना ।**
**नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश ।।१६।।**
**सन्ति पुस्तकविन्यस्ताः काव्यबन्धा गृहे गृहे ।**
**द्वित्रास्तु भावकमनःशिलापट्टनिकुट्टिताः ।।१७।।**
**सत्काव्ये विक्रियाः काश्चिद्भावकस्योल्लसन्ति ताः ।**
**सर्वाभिनयनिर्णीतौ दृष्टा नाट्यसृजा न याः ।।१८।।**
**वाग्भावको भवेत्कश्चित्कश्चिद्धृदयभावकः ।**
**सात्त्विकैराङ्गिकैः कश्चिदनुभावैश्च भावकः ।।१९।।**
**गुणादानपरः कश्चिद्दोषादानपरोऽपरः ।**
**गुणदोषाहृतित्यागपरः कश्चन भावकः ।।२०।।**
**अभियोगे समानेऽपि विचित्रो यदयं क्रमः ।**
**तेन विद्मः प्रसादोऽत्र नृणां हेतुरमानुषः ।।२१।।**
**न निसर्गकविः शास्त्रे न क्षुण्णः कवते च यः ।**
**विडम्बयति सात्मानमाग्रहग्रहिलः किल ।।२२।।**
**कवित्वं न स्थितं यस्य काव्ये च कृतकौतुकः ।**
**तस्य सिद्धिः सरस्वत्यास्तन्त्रमन्त्रप्रयोगतः ।।२३।।**
**पदान्तरं वेत्ति सुधीः स्ववाक्यपरवाक्ययोः ।**
**तदा स सिद्धो मन्तव्यः कुकविः कविरेव वा ।।२४।।**
**कारयित्रीभावयित्र्यावितीमे प्रतिभाभिदे ।**
**अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम् ।।२५।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
चतुर्थोऽध्याय: पदवाक्यविवेक: काव्यविशेषेषु
कारयित्री भावयित्री नाम समीक्षा ।।४।।

०००

## पञ्चमोऽध्यायः

### व्युत्पत्तिः काव्यपाकश्च

१. 'बहुज्ञता व्युत्पत्तिः' इत्याचार्याः । सर्वतोदिक्का हि कविवाचः । तदुक्तम् -

**प्रसरति किमपि कथञ्चन नाभ्यस्ते गोचरे वचः कस्य ।**
**इदमेव तत् कवित्वं यद् वाचः सर्वतोदिक्काः ।।१।।**

२. 'उचितानुचितविवेको व्युत्पत्तिः' इति **यायावरीयः** ।

३. 'प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसी' इत्या**नन्दः** । सा हि कवेर-व्युत्पत्तिकृतं दोषमशेषमाच्छादयति । तदाह-

**अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।**
**यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते ।।२।।**

शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते ।

**एतत् किं शिरसि स्थितं मम पितुः खण्डं सुधाजन्मनो**
**लालाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगाः ।**
**इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः**
**प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः ।।३।।**

४. 'व्युत्पत्तिः श्रेयसी' इति **मङ्गलः** । सा हि कवेरशक्तिकृतं दोषमशे-षमाच्छादयति । तथाहि-

**कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि ।**
**वैदग्धीचित्तचित्तानां हेया शब्दार्थगुम्फना ।।४।।**

व्युत्पत्तिर्यथा-

**कृतः कण्ठे निष्को नहि किमुत तन्वी मणिलता**
**कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि ।**
**न कौशेयं चित्रं वसनमवदातं तु वसितं**
**समासन्नीभूते निधुवनविलासे वनितया ।।५।।**

५. 'प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ' इति **यायावरीयः** । न खलु

लावण्यलाभादृते रूपसम्पद् ऋते रूपसम्पदो वा लावण्यलब्धिर्महते सौन्दर्याय ।

६. उभययोगो यथा-

**जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः**
**प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।**
**भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-**
**सम्भूताम्भोजशोभां विदधदभिनयाद्दण्डपादो भवान्याः ।।६।।**

७. प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते ।
स च त्रिधा । शास्त्रकविः काव्यकविरुभयकविश्च ।

८. 'तेषामुत्तरोत्तरीयो गरीयान्' इति श्यामदेवः ।

९. 'न' इति यायावरीयः । यथा स्वविषये सर्वो गरीयान् । नहि राजहंसश्चन्द्रिकापानाय प्रभवति, नापि चकोरोऽद्भ्यः क्षीरोद्धरणाय । यच्छास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति । यत्काव्यकविः शास्त्रे तर्क-कर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति । उभयकविस्तूभयोरपि वरीयान् यद्युभयत्र परं प्रवीणः स्यात् । तस्मात्**तुल्यप्रभावावेव शास्त्रकाव्यकवी** ।

उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे । यच्छास्त्र-संस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति । काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि ।

### कविभेदाः

१०. तत्र त्रिधा शास्त्रकविः । यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते ।

११. काव्यकविः पुनरष्टधा । तद्यथा रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति।
तत्र रचनाकविः -

**लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धगोलै-**
**र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।**
**खण्डेषूद्दण्डपिण्डीतगरतरलकाः प्रापिरे येन वेला-**
**मालङ्घ्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ।।७।।**

त्रिधा च शब्दकविर्नामाख्यातार्थभेदेन । तत्र नामकविः -

**विद्येव पुंसो महिमेव राज्ञः**
**प्रज्ञेव वैद्यस्य दयेव साधोः।**
**लज्जेव शूरस्य मृजेव यूनो**
**विभूषणं तस्य नृपस्य सैव ।।८।।**

आख्यातकविर्यथा-

**उच्चैस्तरां जहसुराजहृषुर्जगर्जु-**
**राजघ्निरे भुजतटीनिकरैः स्फुरद्भिः।**
**सन्तुष्टुवुर्मुमुदिरे बहु मेनिरे च**
**वाचं गुरोरमृतसम्भवलाभगर्भाम् ।।९।।**

नामाख्यातकविः -

**हतत्विषोऽन्धाः शिथिलांसबाहवः श्रियो विषादेन विचेतना इव।**
**न चुक्रुशुर्नो रुरुदुर्न सस्वनुर्न चेलुरासुर्लिखिता इव क्षणम् ।।**

अर्थकविः-

**देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे**
**हर्षाद् भृङ्गरिटावुदाहृतगिरा चामुण्डयाऽऽलिङ्गिते।**
**पायाद् वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-**
**रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ।।११।।**

द्विधाऽलङ्कारकविः शब्दार्थभेदेन। तयोः शब्दालङ्कारः-

**न प्राप्तं विषम-रणं प्राप्तं पापेन कर्मणा विष-मरणं च।**
**न मृतो भागीरथ्यां मृतोऽहमुपगुह्य मन्दभागी रथ्याम् ।।१२।।**

अर्थाऽलङ्कारः-

**भ्रान्तजिह्वापताकस्य फणच्छत्रस्य वासुकेः।**
**दंष्ट्राशलाकादारिद्र्यं कर्त्तुं योग्योऽस्ति मे भुजः ।।१३।।**

उक्तिकविः -

**उदरमिदमनिन्द्यं मानिनीश्वासलाव्यं**
**स्तनतटपरिणाहो दोर्लतालेह्यसीमा।**
**स्फुरति च वदनेन्दुर्दृक्प्रणालीनिपेय-**
**स्तदिह सुदृशि कल्याः केलयो यौवनस्य ।।१४।।**

यथा वा-

**प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः**
**कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।**
**परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-**
**मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ।।१५।।**

रसकविः -

**एतां विलोकय तनूदरि ! ताम्रपर्णी-**
**मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।**
**यस्याः पयांसि परिणाहिषु हारमूर्त्त्या**
**वामभ्रुवां परिणमन्ति पयोधरेषु ।।१६।।**

मार्गकविः-

**मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः**
**सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च ।**
**शैरीषी कुसुमोद्गतिः परिणमन्मोचं च सोऽयं गणः**
**ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ।।१७।।**

शास्त्रार्थकविः -

**आत्मारामा विहितरतयो निर्विकल्पे समाधौ**
**ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।**
**यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्**
**तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ।।१८।।**इति।

एषां द्वित्रैर्गुणैः **कनीयान्** पञ्चकैर्**मध्यमः**, सर्वगुणयोगी **महाकविः** ।

दश च कवेरवस्था भवन्ति । तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्च औपदेशिकस्य । तद्यथा काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी, सेविता, घटमानो, **महाकविः**, कविराज, आवेशिकः, अविच्छेदी, सङ्क्रामयिता च ।

१. यः कवित्वकामः काव्यविद्योपविद्याग्रहणाय गुरुकुलान्युपास्ते स **विद्यास्नातकः** ।
२. यो हृदय एव कवते निह्नुते च स **हृदयकविः** ।
३. यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सो**ऽन्यापदेशी** ।

४. यः प्रवृत्तवचनः पौरस्त्यानामन्यतमच्छायामभ्यस्यति स **सेविता** ।

५. योऽनवद्यं कवते न तु प्रबध्नाति स **घटमानः** ।

६. योऽन्यतरप्रबन्धे प्रवीणः स **महाकविः** ।

७. यस्तु तत्र तत्र भाषाविशेषे तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स **कविराजः** । ते यदि जगत्यपि कतिपये ।

८. यो मन्त्राद्युपदेशवशाल्लब्धसिद्धिरावेशसमकालं कवते स **आवेशिकः**।

९. यो यदैवेच्छति तदैवाविच्छिन्नवचनः सोऽ**विच्छेदी** ।

१०. यः कन्याकुमारादिषु सिद्धमन्त्रः सरस्वतीं सङ्क्रामयति स **सङ्क्रामयिता** ।

**काव्यपाकः**

सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति ।

'कः पुनरयं पाकः ?' इत्याचार्याः ।

'परिणामः' इति **मङ्गलः** ।

'कः पुनरयं परिणामः ? इत्याचार्याः । 'सुपां तिङां च श्रवःप्रिया व्युत्पत्तिः' इति **मङ्गलः** ।

'सौशब्द्यमेतत्, पदनिवेशनिष्कम्पता पाकः' इत्याचार्याः । तदाहुः-

**आवापोद्धरणे तावद् यावद् दोलायते मनः ।**
**पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ।।१९।।**

आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात् **पदानां परिवृत्ति-वैमुख्यं पाकः**' इति **वामनीयाः** । तदाहुः -

**यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।**
**तं शब्दन्यायनिष्णाताः शब्दपाकं प्रचक्षते ।।२०।।**

'इयमशक्तिर्न पुनः पाकः' इत्यवन्तिसुन्दरी । यदेकस्मिन् वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान् भवति, तस्माद् रसोचित-शब्दार्थसूक्ति-निबन्धनः पाकः । यदाह-

**गुणालङ्कार-रीत्युक्ति-शब्दाऽर्थ-ग्रथन-क्रमः ।**
**स्वदते सुधियां येन वाक्यपाकः स मां प्रति ।।२१।।**

तदुक्तम्- **सति वक्तरि सत्यर्थे शब्दे सति रसे सति ।**
**अस्ति तन्न विना येन परिस्रवति वाङ्मधु ।।२२।।**

**'कार्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोभिधाविषयः, तत्**

**सहृदय-प्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ'** इति यायावरीयः ।

स च कविग्रामस्य काव्यमभ्यस्यतो नवधा भवति । तद्यथा-

१. तत्राद्यन्तयोरस्वादु **पिचुमन्दपाकम्,**

२. आदावस्वादु परिणामे मध्यमं **बदरपाकम्,**

३. आदावस्वादु परिणामे स्वादु **मृद्वीकापाकम्,**

४. आदौ मध्यममन्ते चास्वादु **वार्त्ताकपाकम्,**

५. आद्यन्तयोर्मध्यमं **तिन्तिडीकपाकम्,**

६. आदौ मध्यममन्ते स्वादु **सहकारपाकम्,**

७. आदावुत्तममन्ते चास्वादु **क्रमुकपाकम्,**

८. आदावुत्तममन्ते मध्यमं **त्रपुसपाकम्,**

९. आद्यन्तयोः स्वादु **नालिकेरपाकम्** (आहुः) ।

तेषां त्रिष्वपि त्रिकेषु पाकाः प्रथमे(मौ) त्याज्याः(त्याज्यौ) ।

**वरमकविर्न पुनः कुकविः स्यात्,**

**कुकविता हि सोच्छ्वासं मरणम् ।**

**मध्यमा** संस्कार्याः । संस्कारो हि सर्वस्य गुणमुत्कर्षति ।

द्वादशवर्णमपि सुवर्णं पावकपाकेन हेमीभवति ।

**शेषा** ग्राह्याः ।

स्वभावशुद्धं हि न संस्कारमपेक्षते । न मुक्तामणेः शाणस्तारतायै प्रभवति ।

अनवस्थितपाकं पुनः **कपित्थपाकमा**मनन्ति । तत्र पलालधूननेन अन्नकणलाभवत् सुभाषितलाभः ।

**सम्यगभ्यस्यतः काव्यं नवघा परिपच्यते ।**
**हानोपादानसूत्रेण विभजेत् तद्धि बुद्धिमान् ।।२३।।**

**अयमत्रैव शिष्याणां दर्शितस्त्रिविधो विधिः ।**
**किन्तु विविधमप्येतत् त्रिजगत्यस्य वर्त्तते ।।२४।।**

इति राजशेखरकृतो काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
शिष्यविशेषेषु काव्यपाककल्पः पञ्चमोऽध्यायः ।।५।।

०००

# षष्ठोऽध्यायः

## पदवाक्यविवेकः

१. व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निर्दिष्टस्तदभिधेयोऽर्थस्तौ **पदम्** ।

तस्य पञ्च वृत्तयः सुब्वृत्तिः, समासवृत्तिः, तद्धितवृत्तिः कृद्वृत्तिः, तिङ्वृत्तिश्च । गौरश्वः पुरुषो हस्तीति **जातिवाचिनः** शब्दाः । हरो हरिर्हिरण्यगर्भः काल आकाशं दिगिति **द्रव्यवा**चिनः । श्वेतः कृष्णो रक्तः पीत इति च **गुणवा**चिनः । प्रादयश्चादयश्चा**सत्त्ववचनाः** । नगरमुपप्रस्थितः पन्थाः, वृक्षमनुद्योतते विद्युदिति **कर्मप्रवचनीयाः** ।

**'सेयं सुब्वृत्तिः पञ्चतय्यपि वाङ्मयस्य माता'** इति विद्वांसः । सुब्वृत्तिरेव समासवृत्तिः । व्याससमासावेवानयोर्भेदहेतू । सा च षोढा द्वन्द्वादिभेदेन। तत्र षट्समासीसमाससूक्तम् -

**द्वन्द्वोऽस्मि द्विगुरस्मि च गृहे च मे सततमव्ययीभावः ।**
**तत्पुरुष कर्मधारय येनाऽहं स्यां बहुव्रीहिः ।।१।।**

तद्धितवृत्तिः पुनरनन्ता । तद्धि शास्त्रप्रायो वादो यदुत तद्धितमूढाः पाणिनीयाः । माञ्जिष्ठं रौचनिकं सौरं सैन्धवं वैयासीयमिति तद्धितान्ताः । प्रातिपदिकविषया चेयम् । कृद्वृत्तिश्च धातुविषया । कर्त्ता हर्त्ता कुम्भकारो नगरकार इति कृदन्ताः ।

तिङ्वृत्तिर्दशधा दशलकारीभेदेन । द्विधा च सा धातुसुब्धातुविषयत्वेन । अपाक्षीत् पचति, पक्ष्यतीति धातवीयान्याख्यातानि । अपल्लव-यत् पल्लवयति पल्लवयिष्यतीति सौब्धातवीयानि ।

तदिदमित्थङ्कारं पञ्चप्रकारमपि पदजातं मिथः समन्वीयमानमानन्त्याय कल्पते । तज्जन्मा चैष विदुषां वादो यत्किल **दिव्यं समासहस्त्रं बृहस्पतिर्वक्ता शतक्रतुरध्येता तथापि नान्तः शब्दराशेरासीत् ।**

तत्र दयितसुब्वृत्तयो विदर्भाः । वल्लभसमासवृत्तयो गौडाः । प्रियतद्धिता दाक्षिणात्याः । कृत्प्रयोगरुचय उदीच्याः । अभीष्टतिङ्वृत्तयः सर्वेऽपि सन्तः । तेषां च विशेषलक्षणानुसन्धानेनावर्द्धताख्यातगणः । उक्तञ्च-

**विशेषलक्षणविदां प्रयोगाः प्रतिभान्ति ये ।**
**आख्यातराशिस्तैरेष प्रत्यहं ह्युपचीयते ।।२।।**

२. पदानामभिधित्सितार्थग्रन्थनाकरः सन्दर्भो वाक्यम् । 'तस्य च त्रिधाऽभिधाव्यापारः' इत्यौद्भटाः । वैभक्तः शाक्तः शक्तिविभक्तिमयश्च ।

प्रतिपदं श्रूयमाणासूपपदविभक्तिषु कारकविभक्तिषु वा वैभक्तः ।

लुप्तास्वपि विभक्तिषु समाससामर्थ्यात् तदर्थावगतौ शाक्तः । उभयात्मा च शक्तिविभक्तिमयः । तत्र वैभक्तः -

**नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।**
**खुरयोर्मध्यगो यस्य मेरुः खणखणायते ।।३।।**

शाक्तः-

**वित्रस्तशत्रुः स्पृहयालुलोकः**
**प्रपन्नसामन्त उदग्रसत्त्वः ।**
**अधिष्ठितौदार्यगुणोऽसिपत्र-**
**जितावनिर्नास्ति नृपस्त्वदन्यः ।।४।।**

यथा वा-

**कण्ठदोलायितोद्दामनीलेन्दीवरदामकाः ।**
**हरिभीत्याश्रिताशेषकालियाहिकुला इव ।।५।।**

शक्तिविभक्तिमयः:-

**अथाऽऽगादेकदा स्पष्टचतुराशामुखद्युतिः ।**
**तं ब्रह्मेव शरत्कालः प्रोत्फुल्लकमलासनः ।।६।।**

३. तत्र वाक्यं दशधा । एकाख्यातम्, अनेकाख्यातम्, आवृत्ताख्यातम्, एकाभिधेयाख्यातं, परिणताख्यातम्, अनुवृत्ताख्यातं, समुचिताख्यातम्, अध्याहृताख्यातं, कृदभिहिताख्यातम्, अनपेक्षिताख्यातमिति ।।

तत्रैकाख्यातम् -

**जयत्येकपदाक्रान्तसमस्तभुवनत्रयः ।**
**द्वितीयपदविन्यासव्याकुलाभिनयः शिवः ।।७।।**

अनेकाख्यातम् । तच्च द्विधा सान्तरं निरन्तरम् । तयोः प्रथमम्-

**देवासुरास्तमथ मन्थगिरां विरामे**
**पद्मासनं जय जयेति बभाषिरे च ।**

**द्राग्भेजिरे च परितो बहु मेनिरे च**
**स्वाग्रेसरं विदधिरे च ववन्दिरे च ।।८।।**

द्वितीयम्-

**त्वं पासि हंसि तनुषे मनुषे बिभर्षि**
**विभ्राजसे सृजसि संहरसे विरौषि ।**
**आस्से निरस्यसि सरस्यसि रासि लासि**
**सङ्क्रीडसे ब्रुडसि मेघसि मोदसे च ।।९।।**

४. 'आख्यातपरतन्त्रा वाक्यवृत्तिरतो यावदाख्यातमिह वाक्यानि' इत्याचार्याः। 'एकाकारतया कारकग्रामस्यैकार्थतया च वचोवृत्तेरेकमेवेदं वाक्यम्' इति यायावरीयः ।

आवृत्ताख्यातम् -

**जयत्यमलकौस्तुभस्तबकितांशपीठो हरि-**
**र्जयन्ति च मृगेक्षणाश्चलदपाङ्गदृष्टिक्रमाः ।**
**ततो जयति मल्लिका तदनु सर्वसंवेदना-**
**विनाशकरणक्षमो जयति पञ्चमस्य ध्वनिः ।।१०।।**

एकाभिधेयाख्यातम्-

**हृष्यति चूतेषु चिरं तुष्यति वकुलेषु मोदते मरुति ।**
**इह हि मधौ कलकूजिषु पिकेषु च प्रीयते रागी ।।११।।**

परिणताख्यातम्-

**सोऽस्मिञ्जयति जीवातुः पञ्चेषोः पञ्चमध्वनिः ।**
**ते च चैत्रे विचित्रैलाकक्कोलीकेलयोऽनिलाः ।।१२।।**

अनुवृत्ताख्यातम्-

**चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।**
**चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ।।'३।।**

समुचिताख्यातम् -

**परिग्रहभराक्रान्तं दौर्गत्यगतिचोदितम् ।**
**मनो गन्त्रीव कुपथे चीत्करोति च याति च ।।१४।।**

यथा च-

**स देवः सा दंष्ट्रा कृतकिटिविलासस्मितसिता**
**द्वयं दिश्यात् तुभ्यं मुदमिदमुदारं जयति च ।**

**उदञ्चद्भिर्भूयस्तरलितनिवेशा वसुमती**
**यदग्रे यच्छ्वासैर्गिरिगुडकलीलामुदवहत् ।।१५।।**

अध्याहृताख्यातम्-

**दोर्दण्डताण्डवभ्रष्टमुडुखण्डं बिभर्त्ति यः ।**
**व्यस्तपुष्पाञ्जलिपदे चन्द्रचूडः श्रिये स वः ।।१६।।**

कृदभिहिताख्यातम् -

**अभिमुखे मयि संहृतमीक्षितं**
**हसितमन्यनिमित्तकथोदयम् ।**
**विनयबाधितवृत्तिरतस्तया**
**न विवृतो मदनो न च संवृतः ।।१७।।**

अनपेक्षिताख्यातम् -

**कियन्मात्रं जलं विप्र! जानुदघ्नं नराधिप! ।**
**तथापीयमवस्था ते न सर्वत्र भवादृशाः ।।१८।।**

**गुणवदलङ्कृतञ्च वाक्यमेव काव्यम् ।**

५. 'असत्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यम्' इत्येके । यथा-

**स्थेमा स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्तिः**
**मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः ।**
**इत्थं दिग्भित्तिरोधःक्षतविसरतया मांसलैस्त्वद्यशोभिः**
**स्तोकावस्थानदुस्स्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ।।**

यथा च-

**भ्रश्यद्भ्रूभुग्नभोगीश्वरफणपवनाध्मातपातालतालु-**
**स्त्रुट्यन्नानागिरीन्द्रावलिशिखरखरास्फाललोलाम्बुराशिः ।**
**उद्यन्नीरन्ध्रधूलीविधुरसुरवधूमुच्यमानोपशल्यः**
**कल्योद्योगस्य यस्य त्रिभुवनदमनः सैन्यसम्मर्द आसीत् ।।२०।।**

आहुश्च-

**दृष्टं किञ्चिददृष्टमन्यदपरं वाचालवार्त्तार्पितं**
**भूयस्तुण्डपुराणतः परिणतं किञ्चिच्च शास्त्रश्रुतम् ।**
**सूक्त्या वस्तु यदत्र चित्ररचनं तत्काव्यमव्याहतं**
**रत्नस्येव न तस्य जन्म जलधेर्नो रोहणाद् वा गिरेः ।।२१।।**

६. 'न' इति यायावरीयः-

**नासत्यं नाम किञ्चन काव्ये यस्तु स्तुत्येष्वर्थवादः ।**
**स न परं कविकर्मणि श्रुतौ च शास्त्रे च लोके च ।।२२।।**

तत्र श्रौतः-

**पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः ।**
**शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ।।२३।।**

शास्त्रीयः-

**आपः पवित्रं प्रथमं पृथिव्या-**
**मपां पवित्रं परमं च मन्त्राः ।**
**तेषां च सामर्ग्यजुषां पवित्रं**
**महर्षयो व्याकरणं निराहुः ।।२४।।**

किञ्च-

**यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ।।**

७. कः ? वाग्योगविदेव । कुत एतत् ? यो हि शब्दाञ्ज्ञानात्यपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्य-धर्मः। अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः । अथ योऽवाग्योगवित् अज्ञानं तस्य शरणम्। नात्यन्तायाज्ञानं शरणं भवितु-मर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः कः ? अवाग्योगविदेव । अथ यो वाग्योगवित् विज्ञानं तस्य शरणम् । क्व पुनरिदं पठितम् ? भ्राजा नाम श्लोकाः ।

८. किञ्च भोः श्लोका अपि प्रमाणम् ? किञ्चातः ? यदि प्रमाणमयमपि श्लोकः प्रमाणं भवितुमर्हति ।

**यद्युदुम्बरवर्णानां घटीनां मण्डलं महत्।**
**पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत् ।।२६।।** इति

९. 'प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत् प्रमाणमेव' इति **गोनर्दीयः**।

लौकिकः-

**गुणानुरागमिश्रेण यशसा तव सर्पता ।**
**दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कमम् ।।२७।।**

१०. 'असदुपदेशकत्वात् तर्हि नोपदेष्टव्यं काव्यम्' इत्यपरे। यथा एवम्-

**वयं बाल्ये डिम्भांस्तरुणिमनि यूनः परिणता-**
**वपीच्छामो वृद्धान् परिणयविधेस्तु स्थितिरियम् ।**
**त्वयारब्धं जन्म क्षपयितुममार्गेण किमिदं**
**न नो गोत्रे पुत्रि ! क्वचिदपि सतीलाञ्छनमभूत् ।।२८।।**

११. 'अस्त्ययमुपदेशः किन्तु निषेध्यत्वेन न विधेयत्वेन' इति यायावरीयः। या एवंविधा विधयः परस्त्रीषु पुंसां सम्भवन्ति तानवबुध्येतेति कवीनां भावः। किञ्च कविवचनायत्ता लोकयात्रा। 'सा च निःश्रेयसमूलम्' इति **महर्षयः**। यदाहुः-

**काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि ।**
**तावत् सारस्वतं स्थानं कविरासाद्य मोदते ।।२९।।**

किञ्च-

**श्रीमन्ति राज्ञां चरितानि यानि**
**प्रभुत्वलीलाश्च सुधाशिनां याः ।**
**ये च प्रभावास्तपसामृषीणां**
**ताः सत्कविभ्यः श्रुतयः प्रसूताः ।।३०।।**

उक्तञ्च-

**ख्याता नराधिपतयः कविसंश्रयेण**
**राजाश्रयेण च गताः कवयः प्रसिद्धिम् ।**
**राज्ञा समोऽस्ति न कवेः परमोपकारी**
**राज्ञो न चास्ति कविना सदृशः सहायः ।।३१।।**

**वल्मीकजन्मा स कविः पुराणः**
**कवीश्वरः सत्यवतीसुतश्च ।**
**यस्य प्रणेता तदिहानवद्यं**
**सारस्वतं वर्त्म न कस्य वन्द्यम् ।।३२।।**

१२. 'असभ्यार्थाभिधायित्वान्नोपदेष्टव्यं काव्यम्' इति च केचित्।

यथा-

**प्रसर्पन् प्रग्रीवैर्भृतभुवनकुक्षिर्झणझणा-**
**करालः प्रागल्भ्यं वदति तरुणीनां प्रणयिषु ।**

**विलासव्यत्यासाज्जघनफलकास्फालनघन-**
**स्फुटच्छेदोत्सिक्तः कलकनककाञ्चीकलकलः ।।३३।।**

अपि च-

**नित्यं त्वयि प्रचुरचित्रकपत्रभङ्गी-**
**ताटङ्कताडनविपाण्डुरगण्डलेखाः ।**
**स्निह्यन्तु रत्नरशनारणनाभिराम-**
**कामार्त्तिनर्त्तितनितम्बतटास्तरुण्यः ।।३४।।**

१३. 'प्रक्रमापन्नो निबन्धनीय एवायमर्थः' इति यायावरीयः । तदिदं श्रुतौ शास्त्रे चोपलभ्यते । तत्र याजुषः -

''योनिरुदूलूखलं शिश्नं मुसलं मिथुनेनैत् प्रजननं क्रियते ।।''

आर्षः-

**उपोप मे परामृश मा मे दभ्राणि मन्यथाः ।**
**सर्वाऽहमस्मि रोमशा गान्धारीणामिवाविका ।।३५।।**

शास्त्रीयः-

**यस्याः प्रसन्नधवलं चक्षुः पर्यन्तपक्ष्मलम् ।**
**नवनीतोपमं तस्या भवति स्मरमन्दिरम् ।।३६।।**

**पदवाक्यविवेकोऽयमिति किञ्चित् प्रपञ्चितः ।**
**अथ वाक्यप्रकारांश्च कांश्चिदन्यान्निबोधत ।।३७।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
षष्ठोऽध्यायः पदवाक्यविवेकः ।।६।।

०००

# सप्तमोऽध्यायः

## वाक्यभेदाः

**वाक्यं** वचनमिति व्याहरन्ति । तच्च त्रिधा प्रणेतृभेदेन ब्राह्मं, शैवं, वैष्णवमिति । तदिदं वायुप्रोक्तपुराणादिभ्य उपलब्धं यदुत ब्राह्मं वचः पञ्चधा स्वयम्भुवमैश्वरमार्षमार्षीकमार्षिपुत्रकं च ।

स्वयम्भूर्ब्रह्मा, तस्य **स्वायम्भुवम्** । तन्मनोजन्मानो **भृगुप्रभृतयः** पुत्रास्ते ईश्वरास्तेषा**मैश्वरम्** । ईश्वराणां सुता ऋषयस्तेषा**मार्षम्** । ऋषीणामपत्यानि **ऋषीका**स्तेषामार्षीकम् । ऋषीकाणां सूनव ऋषिपुत्रकास्तेषा-**मार्षिपुत्रकम्** । **स्वयम्भुवः** प्रथमं वचः श्रुतिः, श्रुतेरन्यच्च **स्वायम्भुवम्** । तदाहुः-

**सर्वभूतात्मकं भूतं परिवादं च यद् भवेत् ।**
**क्वचिन्निरुक्तमोक्षार्थं वाक्यं स्वायम्भुवं हि तत् ।।१।।**

तदेव स्तोकरूपान्तरपरिणतमैश्वरं वचः । उक्तञ्च-

**व्यक्तक्रममसंक्षिप्तं दीप्तगम्भीरमर्थवत् ।**
**प्रत्यक्षं च परोक्षं च लक्ष्यतामैश्वरं वचः ।।२।।**

आर्षम्-

**यत् किञ्चिन्मन्त्रसंयुक्तं युक्तं नामविभक्तिभिः ।**
**प्रत्यक्षाभिहितार्थं च तदृषीणां वचः स्मृतम् ।।३।।**

आर्षीकम्-

**नैगमैर्विविधैः शब्दैर्निपातबहुलं च यत् ।**
**न चापि सुमहद् वाक्यमृषीकाणां वचस्तु तत् ।।४।।**

आर्षिपुत्रकम् -

**अविस्पष्टपदप्रायं यच्च स्याद् बहुसंशयम् ।**
**ऋषिपुत्रवचस्तत् स्यात् ससर्वपरिदेवनम् ।।५।।**

तदुदाहरणानि पुराणेभ्य उपलभेत ।

सारस्वताः कवयो नः पूर्वे इत्थङ्कारं कथयन्ति । ब्रह्मविष्णुरुद्रगुह-बृहस्पतिभार्गवादिशिष्येषु चतुःषष्टावुपदिष्टं वचः पारमेश्वरम् । क्रमेण च सञ्चरद्देवैर्देवयोनिभिश्च यथामत्युपजीव्यमानं दिव्यमिति व्यपदिश्यते । देवयोनयस्तु-

**विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।**
**सिद्धगुह्यकभूताश्च पिशाचा देवयोनयः ।।६।।**

तत्र पिशाचादयः शिवानुचराः स्वभूमौ संस्कृतवादिनः, मर्त्ये तु भूतभाषया व्यवहरन्तो निबन्धनीयाः । अप्सरसस्तु प्राकृतभाषया । तद्दिव्यं वचश्चतुर्धा । वैबुधं वैद्याधरं गान्धर्वं योगिनीगतं च । शेषाणामेतेष्वेवोप-लक्षणं प्रकृतिसादृश्येन । तत्र वैबुधम् -

**समासव्याससंदृब्धं शृङ्गाराद्भुतसम्भृतम् ।**
**सानुप्रासमुदारं च वचः स्यादमृताशिनाम् ।।७।।**

यथा-

**यच्चन्द्रकोटिकरकोरकभारभाजि**
**बभ्राम बभ्रुणि जटाकुहरे हरस्य ।**
**तद् वः पुनातु हिमशैलशिलानिकुञ्ज-**
**झात्कारडम्बरविरावि सुरापगाम्भः ।।८।।**

वैद्याधरम् -

**स्तोकानुप्राससच्छायं चतुरोक्तिप्रसादि च ।**
**द्राघीयसा समासेन विद्धि वैद्याधरं वचः ।।९।।**

यथा-

**प्रणतसुरकिरीटप्रांशुरत्नांशुवंश-**
**च्छुरितनखशिखाग्रोद्भासमानारुणाङ्घ्रे ! ।**
**उदिततरणिवृन्दोद्दामधामोर्ध्वनेत्र-**
**ज्वलननिकरदग्धानङ्गमूर्त्ते! नमस्ते ।।१०।।**

यथा वा-

**भ्रमति भ्रमरकरम्बितनन्दनवनचम्पकस्तबकगौरः ।**
**वात्याहत इव वियति स्फुटलक्ष्मा रोहिणीरमणः ।।११।।**

गान्धर्वम् -

**ह्रस्वैः समासैर्भूयोभिर्विभूषितपदोच्चया ।**
**तत्त्वार्थग्रथनग्राह्या गन्धर्वाणां सरस्वती ।।१२।।**

यथा-

**नमः शिवाय सोमाय सगणाय ससूनवे ।**
**सवृषव्यालशूलाय स-कपालाय सेन्दवे ।।१३।।**

योगिनीमतम् -

**समासरूपकच्छायं गम्भीरार्थपदक्रमम् ।**
**सिद्धान्तसमयस्थायि योगिनीनामिदं वचः ।।१४।।**

यथा-

**दुःखेन्धनैकदहनामृतवर्षमेघ!**
**संसारकूपपतनैककरावलम्ब! ।**
**योगीन्द्रदर्पण! जगद्गतकृत्स्नतेजः**
**प्रत्यक्षचौरवर! वीरपते! नमस्ते ।।१५।।**

महाप्रभावत्वाद् भौजङ्गममपि दिव्यमित्युपचर्यते ।

**प्रसन्नमधुरोदात्तसमासव्यासभागवत् ।**
**अनोजस्विपदप्रायं वचो भवति भोगिनाम् ।।१६।।**

यथा-

**सुसर्जितां श्रोत्रसुखां सुरूपा-**
**मनेकरत्नोज्ज्वलचित्रिताङ्गीम् ।**
**विद्याधरेन्द्रः प्रतिगृह्य वीणां**
**पिनाकिने गायति मङ्गलानि ।।१७।।**

'किमर्थं पुनरनुपदेश्ययोर्ब्राह्मपारमेश्वरयोर्वाक्यमार्गयोरुपन्यासः ?' इत्याचार्याः । 'सोऽपि कवीनामुपदेशपरः' इति यायावरीयः । यतो नाटकादावीश्वरादीनां देवानां च प्रवेशे तच्छायावन्ति वाक्यानि विधेयानीति दिव्यम्।

इह हि प्रायोवादो यदुत **मर्त्त्यावतार**व्यवहाररुचेर्भगवतो वासुदेवस्य वचो वैष्णवं तन्मानुषमिति व्यपदिशन्ति । तच्च त्रिधा रीतित्रयभेदेन । तदाहुः-

**वैदर्भी गौडीया पाञ्चाली चेति रीतयस्तिस्त्रः ।**
**आसु च साक्षान्निवसति सरस्वती तेन लक्ष्यन्ते ।।**
**रीतिरूपं वाक्यत्रितयं काकुः पुनरनेकयति ।।१८।।**

१. 'काकुवक्रोक्तिर्नाम शब्दाऽलङ्कारोयम्' इति **रुद्रटः** ।

**'अभिप्रायवान् पाठधर्मः काकुः**, स कथमलङ्कारी स्यात्' इति **यायावरीयः**।

सा च द्विधा **साकाङ्क्षा निराकाङ्क्षा** च । **वाक्यान्तराकाङ्क्षिणी साकाङ्क्षा, वाक्योत्तरभाविनी निराकाङ्क्षा । तदेव वाक्यं काकुविशेषेण साकाङ्क्षम् । तदेव काक्वन्तरेण निराकाङ्क्षम्** । आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा चेति **साकाङ्क्षा** । विधिरूपा, उत्तररूपा, निर्णयरूपेति **निराकाङ्क्षा**।

**विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।**
**सिद्धगुह्यकभूताश्च पिशाचा देवयोनयः ।।६।।**

तत्र पिशाचादयः शिवानुचराः स्वभूमौ संस्कृतवादिनः, मर्त्त्ये तु भूतभाषया व्यवहरन्तो निबन्धनीयाः । अप्सरसस्तु प्राकृतभाषया । तद्दिव्यं वचश्चतुर्धा । वैबुधं वैद्याधरं गान्धर्वं योगिनीगतं च । शेषाणामेतेष्वेवोप-लक्षणं प्रकृतिसादृश्येन । तत्र वैबुधम् -

**समासव्याससंदृब्धं शृङ्गाराद्भुतसम्भृतम् ।**
**सानुप्रासमुदारं च वचः स्यादमृताशिनाम् ।।७।।**

यथा-

**यच्चन्द्रकोटिकरकोरकभारभाजि**
**बभ्राम बभ्रुणि जटाकुहरे हरस्य ।**
**तद् वः पुनातु हिमशैलशिलानिकुञ्ज-**
**झात्कारडम्बरविरावि सुरापगाम्भः ।।८।।**

वैद्याधरम् -

**स्तोकानुप्राससच्छायं चतुरोक्तिप्रसादि च ।**
**द्राघीयसा समासेन विद्धि वैद्याधरं वचः ।।९।।**

यथा-

**प्रणतसुरकिरीटप्रांशुरत्नांशुवंश-**
**च्छुरितनखशिखाग्रोद्भासमानारुणाङ्घ्रे!।**
**उदिततरणिवृन्दोद्दामधामोर्ध्वनेत्र-**
**ज्वलननिकरदग्धानङ्गमूर्त्ते! नमस्ते ।।१०।।**

यथा वा-

**भ्रमति भ्रमरकरम्बितनन्दनवनचम्पकस्तबकगौरः ।**
**वात्याहत इव वियति स्फुटलक्ष्मा रोहिणीरमणः ।।११।।**

गान्धर्वम् -

**ह्रस्वैः समासैर्भूयोभिर्विभूषितपदोच्चया ।**
**तत्त्वार्थग्रथनग्राह्या गन्धर्वाणां सरस्वती ।।१२।।**

यथा-

**नमः शिवाय सोमाय सगणाय ससूनवे ।**
**सवृषव्यालशूलाय स-कपालाय सेन्दवे ।।१३।।**

योगिनीमतम् -

**समासरूपकच्छायं गम्भीरार्थपदक्रमम् ।**
**सिद्धान्तसमयस्थायि योगिनीनामिदं वचः ।।१४।।**

यथा-

**दुःखेन्धनैकदहनामृतवर्षमेघ!**
**संसारकूपपतनैककरावलम्ब! ।**
**योगीन्द्रदर्पण! जगद्‌गतकृत्स्नतेजः**
**प्रत्यक्षचौरवर! वीरपते! नमस्ते ।।१५।।**

महाप्रभावत्वाद् भौजङ्गममपि दिव्यमित्युपचर्यते ।

**प्रसन्नमधुरोदात्तसमासव्यासभागवत् ।**
**अनोजस्विपदप्रायं वचो भवति भोगिनाम् ।।१६।।**

यथा-

**सुसर्जितां श्रोत्रसुखां सुरूपा-**
**मनेकरत्नोज्ज्वलचित्रिताङ्गीम् ।**
**विद्याधरेन्द्रः प्रतिगृह्य वीणां**
**पिनाकिने गायति मङ्गलानि ।।१७।।**

'किमर्थं पुनरनुपदेश्ययोर्ब्राह्मपारमेश्वरयोर्वाक्यमार्गयोरुपन्यासः ?' इत्याचार्याः । 'सोऽपि कवीनामुपदेशपरः' इति यायावरीयः । यतो नाटकादावीश्वरादीनां देवानां च प्रवेशे तच्छायावन्ति वाक्यानि विधेयानीति दिव्यम्।

इह हि प्रायोवादो यदुत **मर्त्त्यावतार**व्यवहाररुचेर्भगवतो वासुदेवस्य वचो वैष्णवं तन्मानुषमिति व्यपदिशन्ति । तच्च त्रिधा रीतित्रयभेदेन । तदाहुः-

**वैदर्भी गौडीया पाञ्चाली चेति रीतयस्तिस्रः ।**
**आसु च साक्षान्निवसति सरस्वती तेन लक्ष्यन्ते ।।**
**रीतिरूपं वाक्यत्रितयं काकुः पुनरनेकयति ।।१८।।**

१. 'काकुवक्रोक्तिर्नाम शब्दाऽलङ्कारोयम्' इति **रुद्रटः** ।

**'अभिप्रायवान् पाठधर्मः काकुः,** स कथमलङ्कारी स्यात्' इति **यायावरीयः**।

सा च द्विधा **साकाङ्क्षा निराकाङ्क्षा** च । **वाक्यान्तराकाङ्क्षिणी साकाङ्क्षा, वाक्योत्तरभाविनी निराकाङ्क्षा । तदेव वाक्यं काकुविशेषेण साकाङ्क्षम् । तदेव काक्वन्तरेण निराकाङ्क्षम् ।** आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा चेति **साकाङ्क्षा** । विधिरूपा, उत्तररूपा, निर्णयरूपेति **निराकाङ्क्षा।**

तत्राक्षेपगर्भा-

**यदि मे वल्लभा दूती तदाऽहमपि वल्लभा ।**
**यदि तस्याः प्रिया वाचः तन्ममाऽपि प्रियप्रियाः ।।१९।।**

एवमेव निर्देष्टुर्विधिरूपा ।

प्रश्नगर्भा-

**गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु ।**
**वर्त्तन्ते साम्प्रतं तासां हेतवः शुक्तिसम्पुटाः ।।२०।।**

इयमेवोपदेष्टुरुत्तररूपा ।

वितर्कगर्भा -

**नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः**
**सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।**
**अयमपि पटुर्धारासारो न बाणपरम्परा**
**कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ।।२१।।**

इयमेवोपदेष्टुर्निर्णयरूपा । ता इमास्तिस्रोऽपि नियतनिबन्धाः ।

तद्विपरीताः पुनरनन्ताः ।

तत्राभ्युपगमानुनयकाकू-

**युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं**
**प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।**
**क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-**
**नद्यैकं दिवसं ममाऽसि न गुरुर्नाऽहं विधेयस्तव ।।२२।।**

अभ्यनुज्ञोपहासकाकू-

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।**
**सञ्चूर्णयामि गदया न सुयोधनोरू**
**सन्धिं करोतु भवतां नृपतिः पणेन ।।२३।।**

एवंत्रिचतुरकाकुयोगोऽपि ।

तत्र त्रियोगः-

**सेयं पश्यति नो कुरङ्गकवधूस्त्रस्तैवमुद्वीक्षते**
**तस्याः पाणिरयं न मारुतवलत्पत्राङ्गुलिः पल्लवः ।**
**तारं रोदिति सैव नैष मरुता वेणुः समापूर्यते**
**सेयं मामभिभाषते प्रियतमा नो कोकिलः कूजति ।।२४।।**

चतुर्योगः-

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ।।२५।।

सख्या वा नायिकाया वा सखीनायिकयोरथ ।
सखीनां भूयसीनां वा वाक्ये काकुरिह स्थिता ।।२६।।

पदवाक्यविदां मार्गो योऽन्यथैव व्यवस्थितः ।
स त्वङ्गाभिनयद्योत्यास्तं काकुः कुरुतेऽन्यथा ।।२७।।

अयं काकुकृतो लोके व्यवहारो न केवलम् ।
शास्त्रेष्वप्यस्य साम्राज्यं काव्यस्याप्येष जीवितम्।।२८।।

कामं विवृणुते काकुरर्थान्तरमतन्द्रिता ।
स्फुटीकरोति तु सतां भावाभिनयचातुरीम् ।।२९।।

इत्थं कविर्निबध्नीयादित्थं च मतिमान् पठेत् ।
यथा निबन्धनिगदश्छायां काञ्चिन्निषिञ्चति ।।३०।।

## पाठ-प्रतिष्ठा

करोति काव्यं प्रायेण संस्कृतात्मा यथा तथा ।
पठितुं वेत्ति स परं यस्य सिद्धा सरस्वती ।।३१।।

यथा जन्मान्तराभ्यासात् कण्ठे कस्यापि रक्तता ।
तथैव पाठसौन्दर्यं नैकजन्मविनिर्मितम् ।।३२।।

ससंस्कृतमपभ्रंशं लालित्यालिङ्गितं पठेत् ।
प्राकृतं भूतभाषां च सौष्ठवोत्तरमुद्गिरेत् ।।३३।।

प्रसन्ने मन्द्रयेद् वाचं तारयेत् तद्विरोधिनि ।
मन्द्रतारौ च रचयेन्निर्वाहिणि यथोत्तरम् ।।३४।।

ललितं काकुसमन्वितमुज्ज्वलमर्थवशकृतपरिच्छेदम् ।
श्रुतिसुखविविक्तवर्णं कवयः पाठं प्रशंसन्ति ।।३५।।

अतितूर्णमतिविलम्बितमुल्बणनादं च नादहीनं च ।
अपदच्छिन्नमनावृतमतिमृदुपरुषं च निन्दन्ति ।।३६।।

गम्भीरत्वमनैश्वर्यं निर्व्यूढिस्तारमन्द्रयोः ।
संयुक्तवर्णलावण्यमिति पाठगुणाः स्मृताः ।।३७।।

यथा व्याघ्री हरेत् पुत्रान् दंष्ट्राभिश्च न पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद् वर्णान् प्रयोजयेत् ।।३८।।

विभक्तयः स्फुटा यत्र समासश्चाकदर्थितः ।
अम्लानः पदसन्धिश्च तत्र पाठः प्रतिष्ठितः ।।३९।।

न व्यस्तपदयोरैक्यं न भिदां तु समस्तयोः ।
न चाख्यातपदम्लानिं विदधीत सुधीः पठन् ।।४०।।

आगोपालकमायोषिदास्तामेतस्य लेह्यता ।
इत्थं कविः पठन् काव्यं वाग्देव्या अतिवल्लभः ।।४१।।

येऽपि शब्दविदो नैव नैव चार्थविचक्षणाः ।
तेषामपि सतां पाठः सुष्ठु कर्णरसायनम् ।।४२।।

पठन्ति संस्कृतं सुष्ठु कुण्ठाः प्राकृतवाचि ते ।
वाराणसीतः पूर्वेण ये केचिन्मगधादयः ।।४३।।

आह स्म-

ब्रह्मन् ! विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ।।४४।।

नातिस्पष्टो न चाश्लिष्टो न रूक्षो नातिकोमलः ।
न मन्द्रो नातितारश्च पाठी गौडेषु वाडवः ।।४५।।

रसः कोऽप्यस्तु काप्यस्तु रीतिः कोऽप्यस्तु वा गुणः ।
सगर्वं सर्वकर्णाटाष्टङ्कारोत्तरपाठिनः ।।४६।।

गद्ये पद्येऽथवा मिश्रे काव्ये काव्यमना अपि ।
गेयगर्भे स्थितः पाठे सर्वोऽपि द्रविडः कविः ।।४७।।

पठन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः ।
जिह्वया ललितोल्लापलब्धसौन्दर्यमुद्रया ।।४८।।

सुराष्ट्रद्रविणाद्या ये पठन्त्यर्पितसौष्ठवम् ।
अपभ्रंशावदंशानि ते संस्कृतवचांस्यपि ।।४९।।

शारदायाः प्रसादेन काश्मीरः सुकविर्जनः ।
कर्णे गुडूचीगण्डूषस्तेषां पाठक्रमः किमु ।।५०।।

ततः पुरस्तात् कवयो ये भवन्त्युत्तरापथे ।
ते महत्यपि संस्कारे सानुनासिकपाठिनः ।।५१।।

मार्गानुगेन निनदेन निधिर्गुणानां
सम्पूर्णवर्णरचनो यतिभिर्विभक्तः ।
पाञ्चालमण्डलभुवां सुभगः कवीनां
श्रोत्रे मधु क्षरति किञ्चन काव्यपाठः ।।५२।।

ललल्लकारया जिह्मं जर्जरस्फाररेफया ।
गिरा भुजङ्गाः पूज्यन्ते काव्यभव्यधियो न तु ।।५३।।

पञ्चस्थानसमुद्भववर्णेषु यथास्वरूपनिष्पत्तिः ।
अर्थवशेन च विरतिः सर्वस्वमिदं हि पाठस्य ।।५४।।

सकाकुकलना पाठप्रतिष्ठेयं प्रतिष्ठिता ।
अर्थानुशासनस्याथ प्रकारः परिकीर्त्त्यते ।।५५।।

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
सप्तमोऽध्यायः समाप्तः ।।७।।

०००

## अष्टमोऽध्यायः

### काव्यार्थयोनयः

वाक्यं 'श्रुतिः, स्मृतिः, इतिहासः, पुराणं, प्रमाणविद्या, समयविद्या, राजसिद्धान्तत्रयी, लोको, विरचना, प्रकीर्णकं च काव्यार्थानां द्वादश योनयः' इति आचार्याः । 'उचितसंयोगेन, योक्तृसंयोगेन, उत्पाद्यसंयोगेन, संयोगविकारेण च सह षोडश' इति यायावरीयः ।

१. तत्र श्रौतः ।

**'उर्वशी हाप्सराः पुरूरवसमैडं चकमे ।'** अत्रार्थे-

**चन्द्राद् बुधः समभवद् भगवान् नरेन्द्र-**
**माद्यं पुरूरवसमैडमसावसूत ।**
**तं चाप्सराः स्मरवती चकमे किमन्य-**
**दत्रोर्वशी स्मितवशीकृतशक्रचेताः ।।१।।**

यथा वा-

**''यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ स एष तस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति ।।२।।''**

अत्रार्थे-

**एतद् यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि**
**द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि ।**
**एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो**
**वर्गः स्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः ।।३।।**

तच्चेदं वेदहरणं यदित्थं कथयन्ति-

**नमोऽस्तु तस्यै श्रुतये यां दुहन्ति पदे पदे ।**
**ऋषयः शास्त्रकाराश्च कवयश्च यथामति ।।४।।**

२. स्मार्त्त:-

**बह्वर्थेष्वभियुक्तेन सर्वत्र व्यपलापिना ।**
**विभावितैकदेशेन देयं यदभियुज्यते ।।५।।**

अत्रार्थे-

**हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।**
**सम्भावितैकदेशेन देयं यदभियुज्यते ।।६।।**

३. ऐतिहासिक:-

**न स सङ्कुचितः पन्थाः येन वाली हतो गतः ।**
**समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ।।७।।**

अत्र-

**मदं नवैश्वर्यलवेन लम्भितं**
**विसृज्य पूर्वः समयो विमृश्यताम् ।**
**जगज्जिघत्सातुरकण्ठपद्धति-**
**र्न वालिनैवाहततृप्तिरन्तकः ।।८।।**

४. पौराणिक:-

**हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाऽप्युदैक्षत ।**
**भयभ्रान्तैः सुरैश्चक्रे तस्यै तस्यै दिशे नमः ।।९।।**

अत्र-

**स सञ्चरिष्णुर्भुवनत्रयेऽपि यां**
**यदृच्छयाशिश्रियदाश्रयः श्रियः ।**
**अकारि तस्यै मुकुटोपलस्खलत्-**
**करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ।।१०।।**

अत्राहु: -

**श्रुतीनां साङ्गशाखानामितिहासपुराणयोः ।**
**अर्थग्रन्थः कथाभ्यासः कवित्वस्यैकमौषधम् ।।११।।**

**इतिहासपुराणाभ्यां चक्षुर्भ्यामिव सत्कविः ।**
**विवेकाञ्जनशुद्धाभ्यां सूक्ष्ममप्यर्थमीक्षते ।।१२।।**

**वेदार्थस्य निबन्धेन श्लाघ्यन्ते कवयो यथा ।**
**स्मृतीनामितिहासस्य पुराणस्य तथा तथा ।।१३।।**

५. द्विविध: प्रामाणिको मैमांसिकस्तार्किकश्च । तत्र प्रथम: - शब्दस्य

सामान्यमभिधेयं विशेषश्चार्थः। अत्र-

**सामान्यवाचि पदमप्यभिधीयमानं**
**मां प्राप्य जातमभिधेयविशेषनिष्ठम्।**
**स्त्री काचिदित्यभिहिते सततं मनो मे**
**तामेव वामनयनां विषयीकरोति ।।१४।।**

६. तर्केषु साङ्ख्यीयः-

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदृष्टिभिः ।।१५।।**

अत्र-

**य एते यज्वानः प्रथितमहसो येऽप्यवनिपा**
**मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया।**
**अमी ये दृश्यन्ते फलकुसुमनम्राश्च तरवो**
**जगत्येवंरूपा विलसति मृदेषा भगवती ।।१६।।**

७. न्यायवैशेषिकीयः-'स किंसामग्रीक ईश्वरः कर्त्ता' ? इति पूर्वपक्षः निरतिशयैश्वर्यस्य तस्य कर्त्तृत्वमिति सिद्धान्तः।

अत्र-

**किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं**
**किमाधारो धाता सृजति किमुपादान इति च।**
**अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः**
**कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ।।१७।।**

८. बौद्धीयः-

**विवक्षापूर्वा हि शब्दास्तामेव विवक्षां सूचयेयुः।**
**भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः**
**स्मरवति यतः कान्ते कान्तां बलात् परिचुम्बति।**
**न न न म म मा मा मां स्प्राक्षीर्निषेधपरं वचो**
**भवति शिथिले मानग्रन्थौ तदेव विधायकम् ।।१८।।**

९. लौकायतिकः-

भूतेभ्यश्चैतन्यं मदशक्तिवत्। अत्र-

**बहुविधमिह साक्षिचिन्तकाः**
**प्रवदन्त्यन्यमितः कलेवरात्।**

**अपि च सुदति ते सचिन्तकाः**
**प्रलयं यान्ति सहैव चिन्तया ।।१९।।**

१०. आर्हतः-

शरीरपरिमाण आत्मा, अन्यथा शरीराफल्यमात्माफल्यं वा ।

अत्र-

**शरीरमात्रमात्मानं ये वदन्ति जयन्ति ते ।**
**तच्चुम्बनेऽपि यज्जातः सर्वाङ्गपुलकोऽस्य मे ।।२०।।**

११. सर्वपार्षदत्वात् काव्यविद्यायाः तानिमानन्यांश्चार्थान् व्युत्पत्तये प्रत्यवेक्षेत । आहुश्च-

**यांस्तर्ककर्कशानर्थान् सूक्तिष्वाद्रियते कविः ।**
**सूर्यांशव इवेन्दौ ते काञ्चिदर्चन्ति कान्तताम् ।।२१।।**

१२. समयविद्यासु शैवसिद्धान्तीयः-

**घोरघोरतरातीतब्रह्मविद्याकलातिगः ।**
**परापरपदव्यापी पायाद् वः परमेश्वरः ।।२२।।**

१३. पाञ्चरात्रः-

**नाद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तोऽप्यनुशासितारः ।**
**सर्वज्वरान् घ्नन्तु ममानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाः ।।**

१४. बौद्धसिद्धान्तीयः-

**कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां स लोकः ।**
**मम हि सुचरितेन सर्वसत्त्वाः परमसुखेन सुखावनीं प्रयान्तु ।।**

एवं सिद्धान्तान्तरेष्वपि ।

१५. राजसिद्धान्तत्रय्यामर्थशास्त्रीयः-

**शमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः**
**परं प्रत्यावापः फलति कृतसेकस्तरुरिव ।**
**बहुव्याजं राज्यं न सुकरमराजप्रणिधिभि-**
**र्दुराराधा लक्ष्मीरनवहितचित्तं छलयति ।।२५।।**

१६. नाट्यशास्त्रीयः-

**एवं धारय देवि बाहुलतिकामेवं कुरुष्वाङ्गकं**
**मात्युच्चैर्नम कुञ्चयाग्रचरणं मां पश्य तावत् स्थितं ।**
**देवीं नर्त्तयतः स्ववक्त्रमुरजेनाम्भोधरध्वानिना**
**शम्भोर्वः परिपान्तु लम्बितलयच्छेदाहतास्तालिकाः ।।२६।।**

१७. कामसूत्रीयः-

**नाश्चर्यं त्वयि यल्लक्ष्मीः क्षिप्त्वाधोक्षजमागता ।**
**असौ मन्दरतस्त्वं तु प्राप्तः समरतस्तया ।।२७।।**

१८. लौकिकस्तु द्विधा प्राकृतो व्युत्पन्नश्च । तयोः प्रथमः -

**स्फुटितपिठरीबन्धश्लाघ्यो विपक्षगृहेप्यभूत्**
**प्रियतम! ययोः स्नेहग्रन्थिस्तथा प्रथमं स नौ ।**
**जनवदधुना सन्नन्यावां वसाव इहैव तौ**
**धिगपरिचितं प्रेम स्त्रीणां चिराय च जीवितम् ।।२८।।**

यथा वा-

**इक्षुदण्डस्य मण्डस्य दध्नः पिष्टकृतस्य च ।**
**वाराहस्य च मांसस्य सैष गच्छति फाल्गुनः ।।२९।।**

१९. द्वितीयो द्विधा समस्तजनजन्यः कतिपयजनजन्यश्च । तयोः प्रथमो ऽनेकधा देशानां बहुत्वात् ।

२०. तत्र दाक्षिणात्यः-

**पिबन्त्यास्वाद्य मरिचं ताम्बूलविशदैर्मुखैः ।**
**प्रियाधरावदंशानि मधूनि द्रमिलाङ्गनाः ।।३०।।**

यथा वा-

**विरम मदन कस्त्वं चैत्र का शक्तिरिन्दो-**
**रिह हि कुसुमबाणाः कुण्ठिताग्राः स्खलन्ति ।**
**हृदयभुव इमास्ताः कुन्तलप्रेयसीनां**
**प्रहृतिकिणकठोरग्रन्थयो वज्रसाराः ।।३१।।**

२१. उदीच्यः-

**नेपाल्यो वल्लभैः सार्द्धमार्द्रैणमदमण्डनाः ।**
**ग्रन्थिपर्णकपालीषु नयन्ति ग्रीष्मयामिनीः ।।३२।।**

द्वितीयः-

**मिथ्यामीलदरालपक्ष्मणि वलत्यन्तः कुरङ्गीदृशो**
**दीर्घापाङ्गसरित्तरङ्गतरले तल्पोन्मुखं चक्षुषि ।**
**पत्युःकेलिमतः कथां विरमयन्नन्योन्यकण्डूयनात्**
**कोऽयं व्याहरतीत्युदीर्य निरगात् सव्याजमालीजनः ।।३३।।**

२२. कविमनीषानिर्मितं कथातन्त्रमर्थमात्रं वा विरचना । तत्राद्या-

**अस्ति चित्रशिखो नाम खड्गविद्याधराधिपः ।**
**दक्षिणे मलयोत्सङ्गे रत्नवत्याः पुरः पतिः ।।३४।।**

**तस्य रत्नाकरसुता श्रियो देव्याः सहोदरी ।**
**स्वयंवरविधावासीत् कलत्रं चित्रसुन्दरी ।।३५।।**

द्वितीया-

**ज्योत्स्नां लिम्पति चन्दनेन स पुमान् सिञ्चत्यसौ मालती-**
**मालां गन्धजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।**
**यस्तस्य प्रथितान् गुणान् प्रथयति श्रीवीरचूडामणे-**
**स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ।।३६।।**

अत्राहुः-

**नीचैर्नार्थिकथासर्गे यस्य न प्रतिभाक्षयः ।**
**स कविग्रामणीरत्र शेषास्तस्य कुटुम्बिनः ।।३७।।**

२३. अभिहितेभ्यो यदन्यत् तत् प्रकीर्णकम् । तत्र हस्तिशिक्षीयः-

**मेघानां क्षणहासतामुपगतो हारः प्रकीर्णो दिशा-**
**माकाशोल्लसिताऽमिताऽमरवधू-पीनस्तनाऽऽस्फालकः ।**
**क्षुण्णश्चन्द्र इवोल्बणो मदवशादैरावणप्रेरितः**
**पायाद् वः परिपाकपाण्डु-लवलीश्री-तस्करः शीकरः ।।३८।।**

२४. रत्नपरीक्षीयः-

**द्वौ वज्रवर्णौ जगतीपतीनां**
**सद्भिः प्रदिष्टौ न तु सार्वजन्यौ ।**
**यः स्याज्जपाविद्रुमभङ्गशोणो**
**यो वा हरिद्रारससंनिकाशः ।।३९।।**

२५. धनुर्वेदीयः-

**स दक्षिणापाङ्गनिविष्टमुष्टिं**
**नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं**
**प्रहर्त्तुमभ्युद्यतमात्मयोनिम् ।।४०।।**

२६. योगशास्त्रीयः-

**यः सर्वेषां हृदयकमले प्राणिनामेकहंस-**
**स्त्वं जागर्षि स्वपिषि च मुहुर्बुध्यसे नापि बुद्धः ।**

**तं त्वाराध्य प्रविततधियो बन्धभेदं विधाय**
**ध्वस्तातङ्का विमलमहसस्ते भवन्तो भवन्ति ।।४१।।**

एवं प्रकीर्णकान्तरमपि ।

२७. उचितसंयोगः-

**पाण्ड्योऽयमंसार्पितलम्बहारः**
**क्लृप्ताङ्गरागो हरिचन्दनेन ।**
**आभाति बालातपरक्तसानुः**
**सनिर्झरोद्गार इवाद्रिराजः ।।४२।।**

२८. योक्तृसंयोगः-

**कुर्वद्भिः सुरदन्तिनो मधुलिहामस्वादु दानोदकं**
**तन्वानैर्नमुचिद्रुहो भगवतश्चक्षुः सहस्रव्यथाम् ।**
**मज्जन् स्वर्गतरङ्गिणीजलभरे पङ्कीकृते पांसुभि-**
**र्यद् यात्राव्यसनं निनिन्द विमनाः स्वर्लोकनारीजनः ।।४३।।**

२९. उत्पाद्यसंयोगः-

**उभौ यदि व्योम्नि पृथक्प्रवाहा-**
**वाकाशगङ्गापयसः पतेताम् ।**
**तेनोपमीयेत तमालनील-**
**मामुक्तमुक्तालतमस्य वक्षः ।।४४।।**

३०. संयोगविकारः-

**गुणानुरागमिश्रेण यशसा तव सर्पता ।**
**दिग्वधूनां मुखं जातमकस्मादर्द्धकुङ्कुमम् ।।४५।।**

यथा वा-

**उन्माद्यत्यम्बुराशिर्विदलति कुमुदं सङ्कुचन्त्यम्बुजानि**
**स्यन्दन्ते चन्द्रकान्ताः पतितसुमनसः सन्ति शेफालिकाश्च ।**
**पीयन्ते चन्द्रिकाम्भः क्रमसरलगलं किञ्च किञ्चिच्चकोरा-**
**श्चन्द्रे कर्पूरगौरद्युतिभृति नभसो याति चूडामणित्वम् ।।**

**इदं कविभ्यः कथितमर्थोत्पत्तिपरायणम् ।**
**इह प्रगल्भमानस्य न जात्वर्थकदर्थना ।।४७।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे अर्थानुशासने षोडश काव्यार्थयोनयः अष्टमोऽध्यायः ।।८।।

## नवमोऽध्यायः

### अर्थव्याप्तिः

'स त्रिधा' इति **द्रौहिणिः**; दिव्यो, दिव्यमानुषो, मानुषश्च ।

'सप्तधा' इति **यायावरीयः**; (एतानादाय) पातालीयो, मर्त्त्यपातालीयो, दिव्यपातालीयो, दिव्यमर्त्त्यपातालीयश्च । तत्र -

**१. दिव्यः -**

**स्मृत्वा यन्निजवारवासगतया वीणासमं तुम्बुरो-**
**रुद्गीतं नलकूबरस्य विरहादुत्कञ्चुलं रम्भया ।**
**तेनैरावणकर्णचापलमुषा शक्रोऽपि निद्रां जहद्**
**भूयः कारित एव हासिनि शचीवक्त्रे दृशां सम्भ्रमम् ।।१।।**

**२. दिव्यमानुषस्तु** चतुर्धा ।

दिव्यस्य मर्त्यागमने, मर्त्यस्य च स्वर्ग-गमन इत्**येको** भेदः ।
दिव्यस्य मर्त्यभावे, मर्त्यस्य च दिव्यभाव इति **द्वितीयः** ।
दिव्येतिवृत्तपरिकल्पनया **तृतीयः** ।
प्रभावाविर्भूतदिव्यरूपतया **चतुर्थः** ।

१. तत्र दिव्यस्य मर्त्यागमनम्-

**श्रियः पतिः श्रीमति शासितुं**
**जगज्जगन्निवासो वसुदेवसद्मनि ।**
**वसन् दर्शावतरन्तमम्बरा-**
**द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ।।२।।**

२. मर्त्यस्य स्वर्गगमनम्-

**पाण्डोर्नन्दन नन्दनं वनमिदं सङ्कल्पजैः सीधुभिः**
**क्लृप्तापानक-केलि कल्पतरुषु द्वन्द्वैःसुधालेहिनाम् ।**
**अप्यत्रेन्दुशिलालवाल-वलये सन्तानकानां तले**
**ज्योत्स्नास्त्रं गलदच्छनिर्झरजलैर्यत्नं विना पूर्यते ।।३।।**

३. दिव्यस्य मर्त्यभावः-

**इति विकसति तस्मिन्नन्ववाये यदूनां**
**समजनि वसुदेवो देवकी यत्कलत्रम् ।**
**किमपरमथ तस्मात् षोडशस्त्रीसहस्र-**
**प्रणिहितपरिरम्भः पद्मनाभो बभूव ।।४।।**

४. मर्त्यस्य दिव्यभावः-

**आकाशयानतटकोटिकृतैकपादा-**
**स्तद्धेमदण्डयुगलान्यवलम्ब्य हस्तैः ।**
**कौतूहलात् तव तरङ्गविघट्टितानि**
**पश्यन्ति देवि मनुजाः स्वकलेवराणि ।।५।।**

५. दिव्येतिवृत्तपरिकल्पना-

**ज्योत्स्नापूरप्रसरविशदे सैकतेऽस्मिन् सरय्वा**
**वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित् ।**
**एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः**
**स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ।।६।।**

६. प्रभावाविर्भूतदिव्यभावः-

**मा गाः पातालमुर्वि! स्फुरसि किमपरं पात्यमानः कुदैत्य!**
**त्रैलोक्यं पादपीठप्रथिम नहि बले! पूरयस्यूनमङ्घ्रेः ।**
**इत्युत्स्वप्नायमाने भुवनभृति शिशावङ्कसुप्ते यशोदा**
**पायाच्चक्राङ्कपादप्रणतिपुलकित-स्मेरगण्डस्थला वः ।।७।।**

७. मर्त्यः-

**वधूं श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे**
**पदे रिक्ते रिक्ते विनिहितपदार्थान्तरमिति ।**
**नदीस्रोतोन्यायादकलितविवेकक्रमघनं**
**न च प्रत्यावृत्तिः प्रवहति जगत्पूर्णमथ च ।।८।।**

८. पातालीयः-

**कर्कोटः कोटिकृत्त्वः प्रणमति पुरतस्तक्षके देहि चक्षुः**
**सज्जः सेवाञ्जलिस्ते कपिलकुलिकयोः स्तौति च स्वस्तिकस्त्वाम् ।**
**पद्मः सद्मैष भक्तेरवलगति पुरः कम्बलोऽयं बलोऽयं**
**सोत्सर्पः सर्पराजो व्रजतु निजगृहं प्रेष्यतां शङ्खपालः ।।९।।**

९. मर्त्यपातालीयः-

**आर्द्रावले व्रज न वेत्स्यपकर्ण कर्णं**
**द्विः सन्दधाति न शरं हरशिष्यशिष्यः ।**

**तत् साम्प्रतं समिति पश्य कुतूहलेन**
**मर्त्यैः शरैरपि किरीटिकिरीटमाथम् ।।१०।।**

१०. इहापि पूर्ववत् समस्तमिश्रभेदानुगमः ।

११. दिव्यपातालीयः-

**स पातु वो यस्य शिखाश्मकर्णिकं**
**स्वदेहनालं फणपत्रसञ्चयम् ।**
**विभाति जिह्वायुगलोलकेसरं**
**पिनाकिनः कर्णभुजङ्गपङ्कजम् ।।११।।**

१२. स्वर्गमर्त्यपातालीयः-

**आस्तीकोऽस्ति मुनिः स्म विस्मयकृतः पारीक्षितीयान्मखात्**
**त्राता तक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च ।**
**उद्वेल्लन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे**
**यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते ।।१२।।**

**''सोऽयमित्थङ्कारमुल्लिख्योपजीव्यमानो निःसीमार्थसार्थः सम्पद्यते। अस्तु नाम निःसीमार्थसार्थः । किन्तु द्विरूप एवासौ विचारितसुस्थो-ऽविचारितरमणीयश्च । तयोः पूर्वमाश्रितानि शास्त्राणि तदुत्तरं काव्यानि''** इत्यौद्भटाः ।।१३।। यथा-

**अपां लङ्घयितुं राशिं रुचा पिञ्जरयन्नभः ।**
**खमुत्पपात हनुमान् नीलोत्पलदलद्युतिः ।।१४।।**

यथा वा-

**त आकाशमसिश्याममुत्पत्य परमर्षयः ।**
**आसेदुरोषधिप्रस्थं मनसा समरंहसः ।।१५।।**

यथा च-

**'तदेव वारि सिन्धूनां महत्स्थेमार्चिषामिति'** इत्यादि ।।१६।।

**'न स्वरूपनिबन्धनमिदं रूपमाकाशस्य सरित्सलिलादेर्वा, किन्तु प्रतिभासनिबन्धनम् । न च प्रतिभासस्तादात्म्येन वस्तुन्यवतिष्ठते यदि तथा स्यात् सूर्याचन्द्रमसोर्मण्डले दृष्ट्या परिच्छिद्यमानद्वादशा-ङ्गुलप्रमाणे पुराणाद्यागमनिवेदितधरावलयमात्रे न स्तः' इति यायावरीयः ।।१७।।**

१३. एवं नक्षत्रादीनां सरित्सलिलादीनामन्येषां च । यथाप्रतिभासं च वस्तुनः स्वरूपं शास्त्रकाव्ययोर्निबन्धोपयोगि । शास्त्रे यथा-

**प्रशान्तजलभृत्यङ्के विमले वियदम्भसि ।**
**ताराकुमुदसम्बन्धे हंसायत इवोडुराट् ।।१८।।**

१४. काव्यानि पुनरेतन्मयान्येव ।

**'अस्तु नाम निःसीमार्थसार्थः । किन्तु रसवत एव निबन्धो युक्तो न नीरसस्य'** इति आपराजितिः ।

यदाह-

**मज्जन-पुष्पावचयन-सन्ध्याचन्द्रोदयादि-वाक्यमिह ।**
**सरसमपि नातिबहुलं प्रकृतरसानन्वितं रचयेत् ।।१९।।**

**यस्तु सरिदद्रिसागरपुरतुरगरथादिवर्णने यत्नः ।**
**कविशक्तिख्यातिफलो विततधियां नो मतः स इह ।।२०।।**

१५. 'आम्' इति यायावरीयः । अस्ति चानुभूयमानो रसस्यानुगुणो विगुणाश्चार्थः, काव्ये तु कविवचनानि रसयन्ति विरसयन्ति च, नार्थाः, अन्वयव्यतिरेकाभ्यां चेदमुपलभ्यते ।

तत्र सरिद्वर्णनरसवत्ता-

**एतां विलोकय तलोदरि ताम्रपर्णी-**
**मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।**
**यस्याः पयांसि परिणाहिषु हारमूर्त्त्या**
**वामभ्रुवां परिणमन्ति पयोधरेषु ।।२१।।**

अद्रिवर्णनरसवत्ता-

**एतास्ता मलयोपकण्ठसरितामेणाक्षि रोधोभुव-**
**श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।**
**यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः**
**पीयन्ते विवृतोर्ध्वचञ्चुविचलत्कण्ठं चकोराङ्गनाः ।।२२।।**

सागरवर्णनरसवत्ता-

**धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी**
**वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।**
**यच्च स्वर्गसदां वयः स्मरसुहृन्नित्यं सदा सम्पदां**
**यल्लक्ष्मीरधिदैवतं च जलधेस्तत्कान्तमाचेष्टितम् ।।२३।।**

एवं पुरतुरगादिवर्णनरसवत्तापि ।

१६. विप्रलम्भेप्यतिरसवत्ता-

**विधर्माणो भावास्तदुपहितवृत्तेर्न धृतये**
**सरूपत्वादन्ये विहितविफलौत्सुक्यविरसाः ।**

**ततः स्वेच्छं पूर्वेष्वसजदितरेभ्यः प्रतिहतं**
**क्व हीनं प्रेयस्या हृदयमिदमन्यत्र रमताम् ।।२४।।**

**कुकविर्विप्रलम्भेऽपि रसवत्तां निरस्यति ।**
**अस्तु वस्तुषु मा वा भूत् कविवाचि रसः स्थितः ।।२५।।**

**'यथा तथा वास्तु वस्तुनो रूपं, वक्तृप्रकृतिविशेषायत्ता तु रस-वत्ता । तथा च यमर्थं रक्तः स्तौति तं विरक्तो विनिन्दति मध्यस्थस्तु तत्रोदास्ते'** इति पाल्यकीर्त्तिः ।।२६।।

**येषां वल्लभया समं क्षणमिव स्फारा क्षपा क्षीयते**
**तेषां शीततरः शशी विरहिणामुल्केव सन्तापकृत् ।**
**अस्माकं न तु वल्लभा न विरहस्तेनोभयभ्रंशिना-**
**मिन्दू राजति दर्पणाकृतिरयं नोष्णो न वा शीतलः ।।२७।।**

१७.- **'विदग्धभणितिभङ्गिनिवेद्यं वस्तुनो रूपं नियतस्वभावम्'** इति अवन्तिसुन्दरी । तदाह-

**वस्तुस्वभावोऽत्र कवेरतन्त्रो**
**गुणागुणावुक्तिवशेन काव्ये ।**
**स्तुवन्निबध्नात्यमृतांशुमिन्दुं**
**निन्दंस्तु दोषाकरमाह धूर्त्तः ।।२८।।**

१८. **'उभयमुपपन्नम्'** इति यायावरीयः ।

१९. स पुनर्द्विधा । मुक्तकप्रबन्धविषयत्वेन ।

तावपि प्रत्येकं पञ्चधा । शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवांश्च । तत्र मुक्तेतिवृत्तो मुक्तकः, सोऽपि शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवांश्च,

एष मुक्तेतिवृत्तः **शुद्धः** ।
स एव सप्रपञ्चश्चि**त्रः** ।
वृत्तेतिवृत्तः **कथोत्थः** ।
सम्भावितेतिवृत्तः **संविधानकभूः** ।
परिकल्पितेतिवृत्तः **आख्यानकवान्** ।

तत्र मुक्तके शुद्धः-

**सा पत्युः प्रथमापराधकरणे शिक्षोपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिचित्रां गतिम् ।**

स्वच्छैरच्छकपोलभित्तिगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ।।२९।।

चित्रः-

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणा-
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ।।३०।।

कथोत्थः-

दत्त्वा रुद्धगतिः खसाधिपतये देवीं ध्रुवस्वामिनीं
यस्मात् खण्डितसाहसो निववृते श्रीशर्मगुप्तो नृपः ।
तस्मिन्नेव हिमालये गुरुगुहाकोणक्वणत्किन्नरे
गीयन्ते तव कार्त्तिकेयनगरस्त्रीणां गणैः कीर्त्तयः ।।३१।।

संविधानकभूः-

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासवलत्कपोलफलकां धूर्त्तोऽपरां चुम्बति ।।३२।।

यथा च-

कुर्वत्या कुङ्कुमाम्भःकपिशितवपुषं यत्तदा राजहंसीं
क्रीडाहंसो मयासावजनि विरहितश्चक्रवाकीभ्रमेण ।
तस्यै तत्पाप्मनो मे परिणमति फलं यत्पुरे प्रेमबन्धा-
देकत्रावां वसावो न च दयितदृशाऽप्यस्ति नौ सन्निकर्षः ।।३३।।

आख्यानकवान् -

अर्थिजनार्थधृतानां वनकरिणां प्रथमकल्पितैर्दशनैः ।
चक्रे परोपकारी हैहयजन्मा गृहं शम्भोः ।।३४।।

निबन्धे शुद्धः-

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
सुचिरमहमभूवं पात्रमालोकितानाम् ।।३५।।

चित्रः-

**अलसवलितमुग्धस्निग्धनिष्यन्दमन्दै-**
**रधिकविकसदन्तर्विस्मयस्मेरतारैः ।**
**हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-**
**रपहृतमपविद्धं पीतमुन्मूलितं च ।।३६।।**

कथोत्थः-

**अभिलाषमुदीरितेन्द्रियः**
**स्वसुतायामकरोत् प्रजापतिः ।**
**अथ तेन निगृह्य विक्रिया-**
**मभिशप्तः फलमेतदन्वभूत् ।।३७।।**

संविधानकभूः-

**क्रोधं प्रभो संहर संहरेति**
**यावद् गिरः खे मरुतां चरन्ति ।**
**तावत् स वह्निर्भवनेत्रजन्मा**
**भस्मावशेषं मदनं चकार ।।३८।।**

आख्यानकवान्-

**पत्युः शिरश्चन्द्रकलामनेन**
**स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशी-**
**र्माल्येन तां निर्वचनं जघान ।।३९।।**

किञ्च । संस्कृतवत् सर्वास्वपि भाषासु यथासामर्थ्यं यथारुचि यथा-कौतुकं चावहितः स्यात् । शब्दार्थयोश्चाभिधानाभिधेयव्यापारप्रगुणतामवबुध्येत। तदुक्तम् -

**एकोऽर्थः संस्कृतोक्त्या सुकविविरचनः प्राकृतेनापरोऽस्मि-**
**न्नन्योऽपभ्रंशगीर्भिः किमपरमपरो भूतभाषाक्रमेण ।**
**द्वित्राभिः कोऽपि वाग्भिर्भवति चतसृभिः किञ्च कश्चिद् विवेक्तुं**
**यस्येत्थं धीः प्रगल्भा स्नपयति सुकवेस्तस्य कीर्त्तिर्जगन्ति ।।४०।।**

**इत्थङ्कारं घनैरर्थैर्व्युत्पन्नमनसः कवेः ।**
**दुर्गमेऽपि भवेन्मार्गे कुण्ठिता न सरस्वती ।।४१।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे अर्थानुशासने अर्थव्याप्तिर्नवमोऽध्यायः ॥९॥

०००

# दशमोऽध्यायः

## कविचर्या राजचर्या च

गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेत । नामधातुपारायणे, अभिधानकोशः, छन्दोविचितिः, अलङ्कारतन्त्रं च काव्यविद्याः । कलास्तु चतुःषष्टिरुपविद्याः । सुजनोपजीव्यकविसन्निधिः, देशवार्त्ता, विदग्धवादो, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः पुरातनकविनिबन्धाश्च । किञ्च-

**स्वास्थ्यं प्रतिभाभ्यासौ भक्तिर्विद्वत्कथा बहुश्रुतता ।**
**स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य ।।१।।**

अपि च । नित्यं शुचिः स्यात् । त्रिधा च शौचं वाक्शौचं मनः-शौचं, कायशौचं च । प्रथमे शास्त्रजन्मनी । तार्तीयीकं तु सनखच्छेदौ पादौ, सताम्बूलं मुखं, सविलेपनमात्रं वपुः, महार्हमनुल्बणं च वासः, सकुसुमं शिर इति । **शुचि शीलनं हि सरस्वत्याः संवननमामनन्ति** ।

स यत्स्वभावः कविस्तदनुरूपं काव्यम् । यादृशाकारश्चित्रकरस्तादृशाकारमस्य चित्रमिति प्रायोवादः । स्मितपूर्वमभिभाषणं, सर्वत्रोक्तिगर्भमभिधानं, सर्वतो रहस्यान्वेषणं, परकाव्यदूषणवैमुख्यमनभिहितस्य, अभिहितस्य तु यथार्थमभिधानम् ।

तस्य भवनं सुसंमृष्टं, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलकल्पितापाश्रयवृक्षवाटिकं, सक्रीडापर्वतकं, सदीर्घिकापुष्करिणीकं, ससरित्समुद्रावर्त्तकं, सकुल्याप्रवाहं, सबर्हिणहरिणहारीतं, ससारसचक्र-वाकहंसं, सचकोरक्रौञ्चकुररशुकसारिकं, घर्मक्लान्तिचौरं, सभूमिधारागृह-यन्त्रलतामण्डपकं, सदोलाप्रेङ्खं च स्यात् । काव्याभिनिवेशखिन्नस्य मन-सस्तद्विनिर्वेदच्छेदायाज्ञामूकपरिजनं विजनं वा तस्य स्थानम् । अपभ्रंशभाषणप्रवणः परिचारकवर्गः, समागधभाषाभिनिवेशिन्यः परिचारिकाः । प्राकृतसंस्कृतभाषाविद आन्तःपुरिका, मित्राणि चास्य सर्वभाषाविन्दि भवेयुः ।

सदःसंस्कारविशुद्ध्यर्थं सर्वभाषाकुशलः, शीघ्रवाक्, चार्वक्षरः, इङ्गिताकारवेदी, नानालिपिज्ञः, कविः, लाक्षणिकश्च लेखकः स्यात् । तदसन्निधावतिरात्रादिषु पूर्वोक्तानामन्यतमः ।

स्वभवने हि भाषानियमं यथा प्रभुर्विदधाति तथा भवति । श्रूयते हि मगधेषु **शिशुनागो** नाम राजा; तेन दुरुच्चारानष्टौ वर्णानपास्य स्वान्तःपुर एव प्रवर्त्तितो नियमः, टकारादयश्चत्वारो मूर्द्धन्यास्तृतीयवर्जमूष्माणस्त्रयः क्षकारश्चेति।

श्रूयते च सूरसेनेषु **कुविन्दो** नाम राजा, तेन परुषसंयोगाक्षरवर्ज-मन्तःपुर एवेति समानं पूर्वेण ।

श्रूयते च कुन्तलेषु **सातवाहनो** नाम राजा, तेन प्राकृतभाषात्मक-मन्तःपुर एवेति समानं पूर्वेण ।

श्रूयते चोज्जयिन्यां **साहसाङ्को** नाम राजा, तेन च संस्कृतभाषा-त्मकमन्तःपुर एवेति समानं पूर्वेण ।

तस्य सम्पुटिका सफलकखटिका, समुद्गकः, सलेखनीकमषी-भाजनानि, ताडिपत्राणि भूर्जत्वचो वा, सलोहकण्टकानि तालदलानि, सुसम्मृष्टा भित्तयः, सततसन्निहिताः स्युः । 'तद्धि काव्यविद्यायाः परिकरः' इति आचार्याः । 'प्रतिभैव परिकरः' इति यायावरीयः ।

"कविः प्रथममात्मानमेव कल्पयेत् । कियान्मे संस्कारः, क्व भाषाविषये शक्तोऽस्मि, किंरुचिर्लोकः परिवृढो वा, कीदृशि गोष्ठ्यां विनीतः, क्वास्य वा चेतः संसजत इति बुद्ध्वा भाषाविशेषमाश्रयेत" इति आचार्याः । 'एकदेशकवेरियं नियमतन्त्रणा स्वतन्त्रस्य पुनरेकभाषावत् सर्वा अपि भाषाः स्युः' इति यायावरीयः।

देशविशेषवशेन च भाषाश्रयणं दृश्यते ।

तदुक्तम्-

**गौडाद्याः संस्कृतस्थाः परिचितरुचयः प्राकृते लाटदेश्याः**
**सापभ्रंशप्रयोगाः सकलमरुभुवष्टक्क-भादानकाश्च ।**
**आवन्त्याः पारियात्राः सह दशपुरजैर्भूतभाषां भजन्ते**
**यो मध्ये-मध्यदेशं निवसति स कविः सर्वभाषानिषण्णः ।।२।।**

**जानीयाल्लोकसाम्मत्यं कविः कुत्र ममेति च ।**
**असम्मतं परिहरेन्मतेऽभिनिविशेत च ।।३।।**

**जनापवादमात्रेण न जुगुप्सेत चात्मनि ।**
**जानीयात् स्वयमात्मानं यतो लोको निरङ्कुशः ।।४।।**

**गीतसूक्तिरतिक्रान्ते स्तोता देशान्तरस्थिते ।**
**प्रत्यक्षे तु कवौ लोकः सावज्ञः सुमहत्यपि ।।५।।**

**प्रत्यक्षकविकाव्यं च रूपं च कुलयोषितः ।**
**गृहवैद्यस्य विद्या च कस्मैचिद् यदि रोचते ।।६।।**

**इदंमहाहासकरं विचेष्टितं**
**परोक्तिपाटच्चरता-रतोऽपि यत् ।**
**सदुक्तिरत्नाकरतां गतान् कवीन्**
**कवित्वमात्रेण समेन निन्दति ।।७।।**

**वचः स्वादु सतां लेह्यं लेशस्वादृवपि कौतुकात् ।**
**बालस्त्रीहीनजातीनां काव्यं याति मुखान्मुखम् ।।८।।**

**कार्यावसरसज्जानां परिव्राजां महीभुजाम् ।**
**काव्यं सद्यः कवीनां च भ्रमत्यह्ना दिशो दश ।।९।।**

**पितुर्गुरोर्नरेन्द्रस्य सुतशिष्यपदातयः ।**
**अविविच्यैव काव्यानि स्तुवन्ति च पठन्ति च ।।१०।।**

१. 'किञ्च नार्द्धकृतं पठेदसमाप्तिस्तस्य फलम्' इति कविरहस्यम् ।
२. न नवीनमेकाकिनः पुरतः । स हि स्वीयं ब्रुवाणः कतरेण साक्षिणा जीयेत ।
३. न च स्वकृतिं बहु मन्येत । पक्षपातो हि गुणदोषौ विपर्यासयति ।
४. न च दृप्येत् । दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति ।
५. परैश्च परीक्षयेत् । यदुदासीनः पश्यति न तदनुष्ठातेति प्रायोवादः ।
६. कविमानिनं तु छन्दोनुवर्त्तनेन रञ्जयेत् कविम्मन्यस्य हि पुरतः सूक्तमरण्यरुदितं स्याद् विप्लवेत च । तदाह-

**इदं हि वैदग्ध्यरहस्यमुत्तमं**
**पठेन्न सूक्तिं कविमानिनः पुरः ।**
**न केवलं तां न विभावयत्यसौ**
**स्वकाव्यबन्धेन विनाशयत्यपि ।।११।।**

७. अनियतकालाः प्रवृत्तयो विप्लवन्ते तस्माद्दिवसं निशां च यामक्रमेण चतुर्द्धा विभजेत् । स **प्रातरुत्थाय** कृतसन्ध्यावरिवस्यः सारस्वतं सूक्तमधीयीत । ततो विद्यावसथे यथासुखमासीनः काव्यस्य विद्या उपविद्याश्चानुशीलयेदाप्रहरात् । न ह्येवंविधमन्यत् प्रतिभाहेतुर्यथा प्रत्यग्रसंस्कारः ।

**द्वितीये** काव्यक्रियाम् । उपमध्याह्नं स्नायादविरुद्धं भुञ्जीत च । भोजनान्ते काव्यगोष्ठीं प्रवर्त्तयेत् । कदाचिच्च प्रश्नोत्तराणि भिन्दीत । (तृतीये) काव्यसमस्याधारणा, मातृकाभ्यासः, चित्रा योगा इत्यायामत्रयम्।

**चतुर्थ** एकाकिनः परिमितपरिषदो वा पूर्वाह्णभागविहितस्य काव्यस्य परीक्षा । **रसावेशतः काव्यं विरचयतो न च विवेक्त्री दृष्टिस्तस्मा-**

दनुपरीक्षेत । अधिकस्य त्यागो, न्यूनस्य पूरणं, अन्यथास्थितस्य परिवर्त्तनं, प्रस्मृतस्यानुसन्धानं चेत्यहीनम् ।

सायं सन्ध्यामुपासीत सरस्वतीं च । ततो दिवा विहितपरीक्षितस्याभिलेखनमाप्रदोषात् । यावदार्त्ति स्त्रियमभिमन्येत । द्वितीयतृतीयौ साधु शयीत। **सम्यक्स्वापो वपुषः वरमारोग्याय ।** चतुर्थे सप्रयत्नं प्रति-बुध्येत । ब्राह्मे मुहूर्त्ते मनः प्रसीदत् ताँस्तानर्थानध्यक्षयतीत्याहोरात्रिकम् ।

**कविप्रकाराः**

चतुर्विधश्चासौ(कविः) । असूर्यम्पश्यो, निषण्णो, दत्तावसरः, प्रायोजनिकश्च ।

यो गुहागर्भभूमिगृहादिप्रवेशान्नैष्ठिकवृत्तिः कवते, **असावसूर्यम्पश्यः** । तस्य सर्वे कालाः ।

यः काव्यक्रियायामभिनिविष्टः, कवते न च **नैष्ठिकवृत्तिः**, स निषण्णस्तस्यापि त एव कालाः ।

यः सेवादिकमविरुन्धानः कवते, स **दत्तावसरः** । तस्य कतिपये कालाः । निशायास्तुरीयो यामार्द्धः । स हि **सारस्वतो मुहूर्त्तः** । भोजनान्तः। सौहित्यं हि स्वास्थ्यमुपस्थापयति; व्यवायोपरमः यदार्त्तिविनिवृत्तिरेकमेकाग्रतायतनं याप्ययानयात्रा । विषयान्तरविनिवृत्तं हि चित्तं यत्र यत्र प्रणि-धीयते तत्र तत्र गुडूचीलागं लगति । यदा यदा चात्मनः **क्षणिकतां** मन्यते स स काव्यकरणकालः ।

यस्तु प्रस्तुतं किञ्चन संविधानकमुद्दिश्य कवते, स **प्रायोजनिकः** । तस्य प्रयोजनवशात् कालव्यवस्था ।

बुद्धिमदाहार्यबुद्ध्योरियं नियममुद्रा । औपदेशिकस्य पुनरिच्छैव सर्वे कालाः, सर्वाश्च नियममुद्राः ।

**पुरुषवत् योषितोऽपि कवीभवेयुः । संस्कारो ह्यात्मनि समवैति, न स्त्रैणं पौरुषं वा विभागमपेक्षते ।** श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्यदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयश्च ।

**सिद्धं च प्रबन्धमनेकादर्शगतं कुर्यात्** । यदित्थं कथयन्ति -

**निक्षेपो विक्रयो दानं देशत्यागोऽल्पजीविता ।**
**त्रुटिको वह्निरम्भश्च प्रबन्धोच्छेदहेतवः ।।१२।।**

**दारिद्र्यं व्यसनासक्तिरवज्ञा मन्दभाग्यता ।**
**दुष्टे द्विष्टे च विश्वासः पञ्च काव्यमहापदः ।।१३।।**

८. पुनः समापयिष्यामि, पुनः संस्करिष्यामि, सुहृद्भिः सह विवेचयिष्यामीति कर्त्तुराकुलता राष्ट्रोपप्लवश्च प्रबन्धविनाशकारणानि ।

**अहर्निशाविभागेन य इत्थं कवते कृती ।**
**एकावलीव तत्काव्यं सतां कण्ठेषु लम्बते ।।१४।।**

**यथा यथाभियोगश्च संस्कारश्च भवेत् कवेः ।**
**तथा तथा निबन्धानां तारतम्येन रम्यता ।।१५।।**

**मुक्तके कवयोऽनन्ताः सङ्घाते कवयः शतम् ।**
**महाप्रबन्धे तु कविरेको द्वौ दुर्लभास्त्रयः ।।१६।।**

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।**
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ।।१७।।**

**रीतिं विचिन्त्य विगणय्य गुणान् विगाह्य**
**शब्दार्थसार्थमनुसृत्य च सूक्तिमुद्राः ।**
**कार्यो निबन्धविषये विदुषा प्रयत्नः**
**के पोतयन्त्ररहिता जलधौ प्लवन्ते ।।१८।।**

**लीढाभिधोपनिषदां सविधे बुधाना-**
**मभ्यस्यतः प्रतिदिनं बहुदृश्वनोऽपि ।**
**किञ्चित् कदाचन कथञ्चन सूक्तिपाकाद्**
**वाक्तत्त्वमुन्मिषति कस्यचिदेव पुंसः ।।१९।।**

**इत्यनन्यमनोवृत्तेर्निःशेषेऽस्य क्रियाक्रमे ।**
**एकपत्नीव्रतं धत्ते कवेर्देवी सरस्वती ।।२०।।**

**सिद्धिः सूक्तिषु सा तस्य जायते जगदुत्तरा ।**
**मूल्यच्छायां न जानाति यस्याः सोऽपि गिरां गुरुः ।।२१।।**

## राजचर्या

९. राजा कविः कविसमाजं विदधीत । राजनि कवौ सर्वो लोकः कविः स्यात् । स काव्यपरीक्षायै सभां कारयेत् । सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्**मत्तवारणीभि**रुपेता स्यात् । तदनुलग्नं राज्ञः केलिगृहम् । **मध्येसभं** चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका **वेदिका** । तस्यां राजासनम् ।

तस्य **चोत्तरतः** संस्कृताः कवयो निविशेरन् । बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते । यस्त्वनेकत्र प्रवीणः स संक्रम्य तत्र तत्रोपविशेत् । ततः परं वेदविद्याविदः प्रामाणिकाः पौराणिकाः स्मार्त्ता भिषजो

मौहूर्त्तिका अन्येऽपि तथाविधाः ।

**पूर्वेण** प्राकृताः कवयः; ततः परं नटनर्त्तकगायनवादनवाग्जीवन-कुशीलवतालावचरा अन्येऽपि तथाविधाः ।

**पश्चिमेना**पभ्रंशिनः कवयः, ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकार-वर्द्धकि-लोहकारा अन्येऽपि तथाविधाः ।

**दक्षिणतो** भूतभाषाकवयः; ततः परं भुजङ्गगणिकाः प्लवक शौभिकजम्भमल्लाः शस्त्रोपजीविनोऽन्येऽपि तथाविधाः ।

१०. तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्त्तयेत् भावयेत् परीक्षेत च । वासुदेव-सातवाहन-शूद्रक-साहसाङ्कादीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्यात् ।

११. तुष्टपुष्टाश्चास्य सभ्या भवेयुः, स्थाने च पारितोषिकं लभेरन् । लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा । अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात् । **मध्वपि नानवदंशं स्वदते।**

१२. काव्यशास्त्रविरतौ विज्ञानिष्वभिरमेत । देशान्तरागतानां च विदुषां मानद्वारा सङ्गं कारयेदौचित्याद् यावत् स्थितिं पूजां च । वृत्तिकामांश्चोपजपेत् संगृह्णीयाच्च । **पुरुषरत्नानामेक एव राजोदन्वान् भाजनम् ।** राजचरितं च राजोपजीविनोप्यनुकुर्युः । राज्ञ एव ह्यसावुपकारो यद् राजोपजीविनां संस्कारः ।

१३. महानगरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत् । तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च ।

श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा-

**इह कालिदासमेण्ठावत्रामररूपसूरभारवयः ।**
**हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम् ।।२२।।**

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा-

**अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः ।**
**वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ।।२३।।**

**इत्थं सभापतिर्भूत्वा यः काव्यानि परीक्षते ।**
**यशस्तस्य जगद्व्यापि स सुखी तत्र तत्र च ।।२४।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे कविचर्या राजचर्या च दशमोऽध्यायः ।।१०।।

०००

# एकादशोऽध्यायः

## शब्दहरणम्

परप्रयुक्तयोः शब्दार्थयोरुपनिबन्धो हरणम्। तद् द्विधा परित्याज्यमनुग्राह्यं च। तयोः शब्दहरणमेव तावत् पञ्चधा पदतः, पादतः, अर्द्धतः, वृत्ततः, प्रबन्धतश्च।

१. 'तत्रैकपदहरणं न दोषाय' इति आचार्याः।

२. 'अन्यत्र द्व्यर्थपदात्' इति यायावरीयः।

तत्र श्लिष्टस्य श्लिष्टपदेन हरणम् -

**दूराकृष्टशिलीमुखव्यतिकरान्नो किङ्किरातानिमा-**
**नाराद् व्यावृतपीतलोहितमुखान् किं वा पलाशानपि।**
**पान्थाः केसरिणं न पश्यत पुरोऽप्येनं वसन्तं वने**
**मूढा रक्षत जीवितानि शरणं यात प्रियां देवताम्॥१॥**

यथा च-

**मा गाः पान्थ प्रियां त्यक्त्वा दूराकृष्टशिलीमुखम्।**
**स्थितं पन्थानमावृत्य किं किरातं न पश्यसि॥२॥**

श्लिष्टपदैकदेशेन हरणम् -

**नाश्चर्यं यदनार्याप्तावस्तप्रीतिरयं मयि।**
**मांसोपयोगं कुर्वीत कथं क्षुद्रहितो जनः॥३॥**

यथा च-

**कोपान् मानिनि किं स्फुरत्यतितरां शोभाधरस्तेऽधरः**
**किं वा चुम्बनकारणाद् दयित नो वायोर्विकारादयम्।**
**तस्मात् सुभ्रु सुगन्धिमाहितरसं स्निग्धं भजस्वादरा-**
**न्मुग्धे मांसरसं ब्रुवन्निति तया गाढं समालिङ्गितः॥४॥**

श्लिष्टस्य यमकेन हरणम्-

**हलमपारपयोनिधिविस्तृतं**
**प्रहरता हलिना समराङ्गणे।**
**निजयशश्च शशाङ्ककलामलं**
**निरवधीरितमाकुलमासुरम्॥५॥**

यथा च-

**दलयता विशिखैर्बलमुन्मदं**
**निरवधीरितमाकुलमासुरम् ।**
**दशसु दिक्षु च तेन यशः सितं**
**निरवधीरितमाकुलमासुरम् ।।६।।**

श्लिष्टस्य प्रश्नोत्तरेण हरणम्-

यस्यां भुजङ्गवर्गः कर्णायतेक्षणं कामिनीवदनं च ।।

यथा च-

**किं करोति कियत्कालं वेश्यावेश्मनि कामुकः ।**
**कीदृशं वदनं वीक्ष्य तस्याः कर्णायतेक्षणम् ।।७।।**

३. यमकस्य यमकेन हरणम्-

**वरदाय नमो हरये पतति जनोऽयं स्मरन्नपि न मोहरये ।**
**बहुशश्चक्रन्द हता मनसि दितिर्येन दैत्यचक्रं दहता ।।८।।**

यथा च-

चक्रं दहतारं चक्रन्द हतारं खड्गेन तवाजौ राजन्नरिनारी ।

एवमन्योन्यसमन्वयेऽन्येऽपि भेदाः ।

नन्विदमुपदेश्यमेव न भवति । यदित्थं कथयन्ति-

**पुंसः कालातिपातेन चौर्यमन्यद् विशीर्यते ।**
**अपि पुत्रेषु पौत्रेषु वाक्चौर्यं च न शीर्यति ।।९।।**

४. "अयमप्रसिद्धः प्रसिद्धिमानहम्, अयमप्रतिष्ठःप्रतिष्ठावानहम्, अप्रकान्तमिदमस्य संविधानकं प्रक्रान्तं मम, गुडूचीवचनोऽयं मृद्वीका-वचनोऽहम्, अनादृतभाषाविशेषोऽयमहमादृतभाषाविशेषः, प्रशान्तज्ञातृ-कमिदं, देशान्तरितकर्त्तृकमिदम्, उच्छिन्ननिबन्धनमूलमिदं, म्लेच्छितकोप-निबन्धनमूलमिदमित्येवमादिभिः कारणैः शब्दहरणेऽर्थहरणे चाभिरमेत" इति अवन्तिसुन्दरी ।

५. त्रिभ्यः पदेभ्यः प्रभृति त्वश्लिष्टेभ्यो हरणम्' इति आचार्याः ।

यथा-

**स पातु वो यस्य जटाकलापे**
**स्थितः शशाङ्कः स्फुटहारगौरः ।**
**नीलोत्पलानामिव नालपुञ्जे**
**निद्रायमाणः शरदीव हंसः ।।१०।।**

यथा च- **स पातु वो यस्य हतावशेषा-**
**स्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।**
**लावण्ययुक्तेष्वपि वित्रसन्ति**
**दैत्याः स्वकान्तानयनोत्पलेषु ।।११।।**

६. 'न' इति यायावरीयः । उल्लेखवान् पदसन्दर्भः परिहरणीयो नाप्रत्यभिज्ञायातः पादोऽपि तस्यापि साम्येन किञ्चन दुष्टं स्यात् ।

यथा- **इत्युक्तवानुक्तिविशेषरम्यं**
**मनः समाधाय जयोपपत्तौ ।**
**उदारचेता गिरमित्युदारां**
**द्वैपायनेनाभिदधे नरेन्द्रः ।।१२।।**

यथा च-

**इत्युक्तवानुक्तिविशेषरम्यं**
**रामानुजन्मा विरराम मानी ।**
**सङ्क्षिप्तमाप्तावसरं च वाक्यं**
**सेवाविधिज्ञैः पुरतः प्रभूणाम् ।।१३।।**

उल्लेखवान् यथा-

**नमः संसारनिर्वाणविषामृतविधायिने ।**
**सप्तलोकोर्म्मिभङ्गाय शङ्करक्षीरसिन्धवे ।।१४।।**

यथा च-

**प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने ।**
**नमोऽनन्तप्रकाशाय शङ्करक्षीरसिन्धवे ।।१५।।**

७. 'पाद एवान्यथात्वकरणकारणं न हरणम्, अपि तु स्वीकरणम्' इति आचार्याः । यथा-

**त्यागाधिकाः स्वर्गमुपाश्रयन्ते**
**त्यागेन हीना नरकं व्रजन्ति ।**
**न त्यागिनां किञ्चिदसाध्यमस्ति**
**त्यागो हि सर्वव्यसनानि हन्ति ।।१६।।**

यथा च- **त्यागो हि सर्वव्यसनानि हन्ती-**
**त्यलीकमेतद् भुवि सम्प्रतीतम् ।**
**जातानि सर्वव्यसनानि तस्या-**
**स्त्यागेन मे मुग्धविलोचनायाः ।।१७।।**

८. तदिदं स्वीकरणापरनामधेयं हरणमेव । तद्वदर्द्धप्रयोगेऽपि । यथा-

**पादस्ते नरवर दक्षिणे समुद्रे**
**पादोऽन्यो हिमवति हेमकूटलग्ने ।**
**आक्रामत्यलघु महीतलं त्वयीत्थं**
**भूपालाः प्रणतिमपास्य किन्नु कुर्युः ।।१८।।**

यथा चोत्तरार्द्धे-

**इत्थं ते विधृतपदद्वयस्य राज-**
**न्नाश्चर्यं कथमिव सीवनी न भिन्ना ।।१९।।**

९. एवं व्यस्तार्द्धप्रयोगेऽपि । यथा-

**तत् तावदेव शशिनः स्फुरितं महीयो**
**यावन्न तिग्मरुचिमण्डलमभ्युदेति ।**
**अभ्युद्गते सकलधामनिधौ तु तस्मि-**
**न्निन्दोः सिताभ्रशकलस्य च को विशेषः ।।२०।।**

यथा च-

**तत् तावदेव शशिनः स्फुरितं महीयो**
**यावन्न किञ्चिदपि गौरतरा हसन्ति ।**
**ताभिः पुनर्विहसिताननपङ्कजाभि-**
**रिन्दोः सिताभ्रशकलस्य च को विशेषः ।।२१।।**

१०. पाद एवान्यथात्वकरणं, न स्वीकरणं, पादापहरणं वा । यथा-

**अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।**
**न्यासापह्नवने चैव दिव्या सम्भवति क्रिया ।।२२।।**

यथा चोत्तरार्द्धे-

**तन्वङ्गी यदि लभ्येत दिव्या सम्भवति क्रिया ।**

यथा वा-

**यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।**
**कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ।।२३।।**

यथा चोत्तरार्द्धे-

**कुक्षौ समुद्राश्चत्वारः स सहेत स्मरानलम् ।**

भिन्नार्थानां तु पादानामेकेन पादेनान्वयनं कवित्वमेव । यथा-

**किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा**
**व्रजति दिनकरोऽयं यत्र नास्तं कदाचित् ।**

**भ्रमति विहगसार्थानित्थमापृच्छमानो**
**रजनिविरहभीतश्चक्रवाको वराकः ।।२४।।**

यथा च- **जयति सितविलोलव्यालयज्ञोपवीती**
**घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।**
**अविदितमृगचिह्नामिन्दुलेखां दधानः**
**परिणतशितिकण्ठश्यामकण्ठः पिनाकी ।।२५।।**

यथा च-(माघ. ११.६४)

**कुमुदवनमपश्रि श्रीमदम्भोजषण्डं**
**त्यजति मुदमुलूकः प्रीतिमाँश्चक्रवाकः ।**
**उदयमहिमरश्मिर्याति शीतांशुरस्तं**
**हतविधिलसितानां ही विचित्रो विपाकः ।।२६।।**

यथा च-

**किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा**
**घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।**
**निवसति स पिनाकी यत्र यायात् तदस्मिन्**
**हतविधिलसितानां ही विचित्रो विपाकः ।।२७।।**

११. पादोनवत् कतिपयपदप्रयोगोऽपि । यथा-

**या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा**
**दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।**
**ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं**
**श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ।।२८।।**

यथा च चतुर्थपादे-

**श्रान्ता नैव च लब्धमुत्पलदृशां प्रेम्णः समानं सुखम् ।।**

१२. पादैकदेशग्रहणमपि पदैकदेशोपलक्षणपरम् । यथा-

**असकलहसितत्वात् क्षालितानीव कान्त्या**
**मुकुलितनयनत्वाद् व्यक्तकर्णोत्पलानि ।**
**पिबति मधुसुगन्धीन्याननानि प्रियाणां**
**त्वयि विनिहितभारः कुन्तलानामधीशः ।।२९।।**[1]

---

१. अत्र कालिदासो दूतत्वेन कल्पितः कैश्चिदितिहासविद्भिः ।

यथा चोत्तरार्द्धे-

**पिबतु मधुसुगन्धीन्याननानि प्रियाणां**
**मयि विनिहितभारः कुन्तलानामधीशः ।।३०।।**

१३. वाक्यस्यान्यथाव्याख्यानमपि न स्वीकरणं हरणं वा । यथा-

**सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां**
**दूरादेव मयोज्झिताः सुरभयः स्त्रग्दामधूपादयः ।**
**कोपं रागिणी मुञ्च मय्यवनते दृष्टे प्रसीदाधुना**
**सद्यस्त्वद्विरहाद् भवन्ति दयिते ! सर्वा ममान्धा दिशः ।।३१।।**

१४. एतच्च कान्ताप्रसादनपरं वाक्यं कुपितदृष्टिपरतया व्याख्यातं, न स्वीकृतं हृतं वा ।

यत्तु परकीयं स्वीयमिति प्रोक्तानामन्यतमेन कारणेन विलपन्ति, तन्न केवलं हरणम्, अपि तु दोषोदाहरणम् । मुक्तकप्रबन्धकविषयं तत् ।

१५. मूल्यक्रयोऽपि हरणमेव । वरमप्राप्तिर्यशसो न पुनर्दुर्यशः ।

'तद्वदुक्तिहरणम्' इति-आचार्याः ।

यथा-

ऊरुद्वन्द्वं सरसकदलीकाण्डसब्रह्मचारि ।

यथा च- **ऊरुद्वयं कदलकन्दलयोः सदर्शं**
**श्रोणिः शिलाफलकसोदरसन्निवेशा ।**
**वक्षः स्तनद्वितयताडितकुम्भशोभं**
**सब्रह्मचारि शशिनश्च मुखं मृगाक्ष्याः ।।३२।।**

१६. उक्तयो ह्यर्थान्तरसङ्क्रान्ता न प्रत्यभिज्ञायन्ते, स्वदन्ते च; तदर्थास्तु हरणादपि हरणं स्युः इति यायावरीयः ।

**नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः ।**
**स नन्दति विना वाच्यं यो जानाति निगूहितुम् ।।३३।।**

**उत्पादकः कविः कश्चित् कश्चिच्च परिवर्त्तकः ।**
**आच्छादकस्तथा चान्यस्तथा संवर्गकोऽपरः ।।३४।।**

**शब्दार्थोक्तिषु यः पश्येदिह किञ्चन नूतनम् ।**
**उल्लिखेत् किञ्चन प्राच्यं मान्यतां स महाकविः ।।३५।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
एकादशोऽध्यायः शब्दहरणानि ।।११।।

०००

# द्वादशोऽध्यायः

## शब्दार्थहरणेषु कविप्रभेदाः

१. 'पुराणकविक्षुण्णे वर्त्मनि दुरापमस्पृष्टं वस्तु, ततश्च तदेव संस्कर्त्तुं प्रयतेत' इति आचार्याः ।

२. 'न' इति **वाक्पतिराजः** ।

**आसंसारमुदारैः कविभिः प्रतिदिनगृहीतसारोऽपि ।**
**अद्याऽप्यभिन्नमुद्रो विभाति वाचां परिस्पन्दः ।।१।।**

तत्प्रतिभासाय च परप्रबन्धेष्ववदधीत ।

३. 'तदवगाहने हि तदेकयोनयोऽर्थाः पृथक्पृथक् प्रथन्ते' इत्येके ।

४. 'तत्रत्यानामर्थानां छायया परिवृत्तिः फलम्' इत्यपरे ।

५. 'महात्मनां हि संवादिन्यो बुद्धय एकमेवार्थमुपस्थापयन्ति, तत्परित्यागाय तानाद्रियेत' इति च केचित् ।

६. 'न' इति **यायावरीयः** । **सारस्वतं** चक्षुरवाङ्मसगोचरेण प्रणिधानेन दृष्टमदृष्टं चार्थजातं स्वयं विभजति । तदाहुः-

**सुप्तस्यापि महाकवेः शब्दार्थौ सरस्वती दर्शयति, तदितरस्य तत्र जाग्रतोऽप्यन्धं चक्षुः । अन्यदृष्टचरे ह्यर्थे महाकवयो जात्यन्धाः, ततद्विपरीते तु दिव्यदृशः । न तत् त्र्यक्षः सहस्राक्षो वा यच्चर्मचक्षुषोऽपि कवयः पश्यन्ति । मतिदर्पणे कवीनां विश्वं प्रतिफलति । कथं नु वयं दृश्यामह इति महात्मनामहंपूर्विकयैव शब्दार्थाः पुरो धावन्ति । यत् सिद्धप्रणिधाना योगिनः पश्यन्ति, तत्र वाचा विचरन्ति कवय इत्यनन्ता महाकविषु सूक्तयः ।।**

**'समस्तमस्ति' इति यायावरीयः । किन्तु त्रिपथमर्थमध्यगीष्महि यदुत १. अन्ययोनिर् २. निह्नुतयोनिः ३. अयोनिश्च ।**

७. तत्रान्ययोनिर्द्विधा प्रतिबिम्बकल्प आलेख्यप्रख्यश्च । निह्नुतयोनिरपि द्विधा तुल्यदेहितुल्यः परपुरप्रवेशसदृशश्च । अयोनिः पुनरेक एव । तत्र-

अर्थः स एव सर्वो वाक्यान्तरविरचनापरं यत्र ।
क. तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात् ।।२।।

यथा-

ते पान्तु वः पशुपतेरलिनीलभासः
कण्ठप्रदेशघटिताः फणिनः स्फुरन्तः ।
चन्द्राऽमृताऽम्बुकण-सेकसुख-प्ररूढै-
र्यैरङ्कुरैरिव विराजति कालकूटः ।।३।।

यथा च-

जयन्ति नीलकण्ठस्य नीलाः कण्ठे महाऽहयः ।
गलद्गङ्गाम्बुसंसिक्तकालकूटाङ्कुरा इव।।४।।

कियताऽपि यत्र संस्कारकर्मणा वस्तु भिन्नवद् भाति ।
ख. तत् कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् ।।

तत्रैवार्थे यथा-

जयन्ति धवलव्यालाः शम्भोर्जूटावलम्बिनः ।
गलदगङ्गाम्बुसंसिक्तचन्द्रकन्दाङ्कुरा इव ।।६।।

विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् ।
ग. तत् तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि ।।७।।

अवीनादौ कृत्वा भवति तुरगो यावदवधिः
पशुर्धन्यस्तावत् प्रतिवसति यो जीवति सुखम् ।
अमीषां निर्माणं किमपि तदभूद् दग्धकरिणां
वनं वा क्षोणीभृद्भुवनमथवा येन शरणम् ।।८।।

अत्रार्थे-

प्रतिगृहमुपलानामेक एव प्रकारो
मुहुरुपकरणत्वादर्घिताः पूजिताश्च।
स्फुरति हतमणीनां किन्तु तद्धाम येन
क्षितिपतिभवने वा स्वाकरे वा निवासः ।।९।।

मूलैक्यं यत्र भवेत् परिकरबन्धस्तु दूरतोऽनेकः ।
घ. तत् परपुरप्रवेशप्रतिमं काव्यं सुकविभाव्यम् ।।१०।।

यथा-

**यस्यारातिनितम्बिनीभिरभितो वीक्ष्याम्बरं प्रावृषि**
**स्फूर्जद्गर्जितनिर्जिताम्बुधिरवस्फाराभ्रवृन्दाकुलम् ।**
**उत्सृष्ट-प्रसभाभिषेणन-भय-स्पष्टप्रमोदाश्रुभिः**
**किञ्चित्कुञ्चितलोचनाभिरसकृद् घ्राताः कदम्बानिलाः ।।११।।**

अत्रार्थे-

**आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं**
**यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।**
**हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं**
**सीमन्ते निहितं कथञ्चन ततः कर्णावतंसीकृतम् ।।१२।।**

८x४=३२. तदेतच्चतुष्टयनिबन्धनाश्च कवीनां द्वात्रिंशद्धरणोपायाः । अमीषां चार्थानामन्वर्था अयस्कान्तवच्चत्वारः कवयः, पञ्चमश्चादृष्टचरार्थदर्शी । तदाहुः-

**भ्रामकश्चुम्बकः किञ्च कर्षको द्रावकश्च सः ।**
**स कविर्लौकिकोऽन्यस्तु चिन्तामणिरलौकिकः ।।१३।।**

**तन्वानोऽनन्यदृष्टत्वं पुराणस्यापि वस्तुनः ।**
**योऽप्रसिद्ध्यादिभिर्भ्राम्यत्यसौ स्याद् भ्रामकः कविः ।।१४।।**

**यश्चुम्बति परस्यार्थं वाक्येन स्वेन हारिणा ।**
**स्तोकार्पितनवच्छायं चुम्बकः स कविर्मतः ।।१५।।**

**परवाक्यार्थमाकृष्य यः स्ववाचि निवेशयेत् ।**
**समुल्लेखेन केनापि स स्मृतः कर्षकः कविः ।।१६।।**

**अप्रत्यभिज्ञेयतया स्ववाक्ये नवतां नयेत् ।**
**यो द्रावयित्वा मूलार्थं द्रावकः स भवेत् कविः ।।१७।।**
**चिन्तासमं यस्य रसैकसूतिरुदेति चित्राकृतिरर्थसार्थः ।**
**अदृष्टपूर्वो निपुणैः पुराणैः कविः स चिन्तामणिरद्वितीयः ।।१८।।**

९. तस्य चायोनिरर्थः स च त्रिधा लौकिकालौकिकभेदेन, तयोर्मिश्रत्वेन च । तत्र लौकिकः -

**मा कोशकारलतिके वह वर्णगर्वं**
**किं डम्बरेण चणिके तव कौसुमेन ।**
**पुण्ड्रेक्षुयष्टिरियमेकतरा चकास्तु**
**या स्यन्दते रसमृतेऽपि हि यन्त्रयोगात् ।।१९।।**

अलौकिकः-

**देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे**
**हर्षाद् भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते ।**
**पायाद् वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-**
**रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ।।२०।।**

मिश्रः-

**स्थिते कुक्षेरन्तर्मुरजयिनि निःश्वासमरुतो**
**जनन्यास्तन्नाभी-सरसिज-परागोत्करमुचः ।**
**निपीताः सानन्दं रचितफणचक्रेण हलिना**
**समन्तादस्यासुः प्रतिदिवसमेनांसि भवतः ।।२१।।**

तेषां च चतुर्णामर्थानाम्-

**चत्वार एते कथिता मयैव**
**येऽर्था कवीनां हरणोपदेशे ।**
**प्रत्येकमष्टत्ववशाद् भवन्ति**
**द्वात्रिंशता तेऽनुगताः प्रभेदैः ।।२२।।**

**(क)** तत्र **प्रतिबिम्बकल्पविकल्पाः ।**

क१. स एवार्थः पौर्वापर्यविपर्यासाद् **व्यस्तकः ।**

यथा- **दृष्ट्वान्येभं छेदमुत्पाद्य रज्ज्वा**
**यन्तुर्वाचं मन्यमानस्तृणाय ।**
**गच्छन्दध्रे नागराजः करिण्या**
**प्रेम्णा तुल्यं बन्धनं नास्ति जन्तोः ।।२३।।**

अत्रार्थे -

**निर्विवेकमनसोऽपि हि जन्तोः**
**प्रेमबन्धन-मशृङ्खल-दाम ।**
**यत् प्रति प्रतिगजं गजराजः**
**प्रस्थितश्चिरमधारि करिण्या ।।२४।।**

क२. बृहतोऽर्थस्यार्द्धप्रणयनं **खण्डम् ।**

यथा-

**पुरा पाण्डुप्रायं तदनु कपिशिम्ना कृतपदं**
**ततः पाकोद्रेकादरुणगुणसंवर्गितवपुः ।**

**शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं**
**वने वीतामोदं बदरमरसत्वं कलयति ।।२५।।**

अत्रार्थे-

**पाकक्रियापरिचयप्रगुणीकृतेन**
**संवर्गितारुणगुणं वपुषा निजेन ।**
**आपादितस्थपुटसंस्थितिशोषपोषां-**
**देवद्वने विरसतां बदरं बिभर्त्ति ।।२६।।**

क३. संक्षिप्तार्थविस्तरेण **तैलबिन्दुः** ।

यथा-

**यस्य तन्त्रभराक्रान्त्या पातालतलगामिनी ।**
**महावराहदंष्ट्राया भूयः सस्मार मेदिनी ।।२७।।**

अत्रार्थे-

**यत्तन्त्राक्रान्तिमज्जत्पृथुलमणि-शिलाशल्यवेल्लत्फणान्ते**
**क्लान्ते पत्यावहीनां चलदचलमहास्तम्भसम्भारसीमा ।**
**सस्मार स्फारचन्द्रद्युति पुनरवनिस्तद्धिरण्याक्षवक्षः-**
**स्थूलास्थिश्रेणिशाणानिकषणसितमप्याशु दंष्ट्राग्रमुग्रम् ।।२८।।**

क४. अन्यतमभाषानिबद्धं भाषान्तरेण परिवर्त्त्यत इति **नटनेपथ्यम्** ।

यथा-

**नेच्छइ पासासंकी काओ दिण्णं पि पहिअघरिणीए ।**
**ओहत्तकरयलोग्गलियवलयमज्झट्ठिअं पिण्डं ।।२९।।**

अत्रार्थे-

**दत्तं पिण्डं नयनसलिलक्षालनाधौतगण्डं**
**द्वारोपान्ते कथमपि तया सङ्गमाशानुबन्धात् ।**
**वक्रग्रीवश्चलनतशिराः पार्श्वसञ्चारिचक्षुः**
**पाशाशङ्की गलितवलयं नैनमश्नाति काकः ।।३०।।**

क५. छन्दसा परिवृत्तिश्**छन्दोविनिमयः** ।

यथा-

**कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्**
**तद्वासः श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।**

**एताव् सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः**
**कोऽसौ कास्मि रतं नु किं कथमपि स्वल्पापि मे न स्मृतिः ।।३१।।**

अत्रार्थे-

**धन्यास्तु याः कथयथ प्रियसङ्गमेऽपि**
**विश्रब्धचाटुकशतानि रतान्तरेषु ।**
**नीवीं प्रति प्रणिहितश्च करः प्रियेण**
**सख्यः शपामि यदि किञ्चिदपि स्मरामि ।।३२।।**

क६. कारणपरावृत्त्या **हेतुव्यत्ययः** ।

यथा-

**ततोऽरुणपरिस्पन्दमन्दीकृतरुचिः शशी ।**
**दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ।।३३।।**

अत्रार्थे-

**समं कुसुमचापेन गर्भिणीगण्डपाण्डुना ।**
**उदयाद्रिशिरःसीम्नि निहितं पदमिन्दुना ।।३४।।**

क७. दृष्टस्य वस्तुनोन्यत्र सङ्क्रमितिः **सङ्क्रान्तकम्** ।

यथा-

**स्नानार्द्रार्द्रैर्विधुतकबरीबन्धलोलैरिदानीं**
**श्रोणीभारः कृतपरिचयः पल्लवैः कुन्तलानाम् ।**
**अप्येतेभ्यो नभसि पततः पङ्क्तिशो वारिबिन्दून्**
**स्थित्वोद्ग्रीवं कुवलयदृशां केलिहंसाः पिबन्ति ।।३५।।**

अत्रार्थे-

**सद्यःस्नातजपत्तपोधनजटाप्रान्तस्रुताः प्रोन्मुखैः**
**पीयन्तेऽम्बुकणाः कुरङ्गशिशुभिस्तृष्णाव्यथाविक्लवैः ।**
**एतां प्रेमभरालसां च सहसा शुष्यन्मुखीमाकुलः**
**श्लिष्यन् रक्षति पक्षसम्पुटकृतच्छायः शकुन्तः प्रियाम् ।।३६।।**

क८. उभयवाक्यार्थोपादानं **सम्पुटः** ।

यथा-

**विन्ध्यस्याद्रेः परिसरनदी नर्मदा सुभ्रु सैषा**
**यादोभर्त्तुः प्रथमगृहिणीं यां विदुः पश्चिमस्य ।**

**यस्यामन्तः स्फुरितशफरत्रासहासाकुलाक्षी**
**स्वैरं स्वैरं कथमपि मया तीरमुत्तारितासि ।।३७।।**

यथा च-

**नाभीगुहाबिलविशच्चलवीचिजात-**
**मञ्जुध्वनिश्रुतिकणत्कलकुक्कुभानि ।**
**रेवाजलान्यविरलं ग्रहिलीक्रियन्ते**
**लाटाऽङ्गनाभि-रपराह्ण-निमज्जनेषु ।।३८।।**

अत्रार्थे-

**यद् वर्ग्याभिर्जगाहे गुरुशकुलकुलास्फालनत्रासहास-**
**व्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु ।**
**अम्भो गम्भीरनाभीकुहरकवलनोन्मुक्तिपर्यायलोल-**
**त्कल्लोलाबद्धमुग्धध्वनिचकितरणत्कुक्कुभं कामिनीभिः ।।३९।।**

१०. सोऽयं कवेरकवित्वदायी सर्वथा प्रतिबिम्बकल्पः परिहरणीयः ।

**पृथक्त्वेन न गृह्णन्ति वस्तु काव्यान्तरस्थितम् ।**
**पृथक्त्वेन न गृह्णन्ति स्ववपुः प्रतिबिम्बितम् ।।४०।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
शब्दार्थहरणेषु कविप्रभेदाः प्रतिबिम्बकल्पविकल्पस्य
समीक्षा द्वादशोऽध्यायः ॥१२॥

०००

# त्रयोदशोऽध्यायः

## अर्थहरणेष्वालेख्यप्रख्यादिभेदाः

**(ख) आलेख्यप्रख्यपरिसङ्ख्या ।**

ख१. सदृशसञ्चारणं **समक्रमः** ।

यथा-

**अस्ताद्रिवेश्मनि दिशो वरुणप्रियाया-**
**स्तिर्यक्कथञ्चिदपयन्त्रणमास्थितायाः ।**
**गण्डैकपार्श्वमिव कुङ्कुमपङ्कचुम्बि**
**बिम्बं रुचामधिपतेररुणं रराज ।।१।।**

यथा च-

**प्राग्दिशः प्रतिकलं विलसन्त्याः**
**कुङ्कुमारुणकपोलतलेन ।**
**साम्यमेति कलितोदयरागः**
**पश्य सुन्दरि तुषारमयूखः ।।२।।**

ख२. अलङ्कृतमनलङ्कृत्याभिधीयत इति **विभूषणमोषः** ।

यथा-

**कुवलयशिति मूले बालचन्द्राङ्कुराभं**
**तदनु खलु ततोऽग्रे पाकपीताम्रपीतम् ।**
**अभिनवरविरोचिर्धूम्रधूम्रं शिखाया-**
**मिति विविधविकारं द्युतिते दैपमर्चिः ।।३।।**

अत्रार्थे-

**मनाङ् मूले नीलं तदनु कपिशोन्मेषमुदरे**
**ततः पाण्डु स्तोकं स्फुरदरुणलेखं च तदनु ।**
**शिखायामाधूम्रं धृतविविधवर्णक्रममिति**
**क्षणादर्चिर्दैपं दलयति तमः पुञ्जितमपि ।।४।।**

ख३. क्रमेणाभिहितस्यार्थस्य विपरीताभिधानं **व्युत्क्रमः** ।

यथा तत्रैव-

**श्यामं शिखाभुवि मनागरुणं ततोऽधः**
**स्तोकावपाण्डुरघनं च ततोऽप्यधस्तात् ।**
**आपिञ्जरं तदनु तस्य तले च नील-**
**मन्धं तमःपटलमर्द्दति दैपमर्चिः ।।५।।**

ख४. सामान्यनिबन्धे विशेषाभिधानं **विशेषोक्तिः** ।

यथा-

**इत्युद्गते शशिनि पेशलकान्तदूती-**
**संलापसञ्चलितलोचनमानसाभिः ।**
**अग्राहि मण्डनविधिर्विपरीतभूषा-**
**विन्यासहासितसखीजनमङ्गनाभिः ।।६।।**

अत्रार्थे-

**चकार काचित् सितचन्दनाङ्के**
**काञ्चीकलापं स्तनभारपृष्ठे ।**
**प्रियं प्रति प्रेषितचित्तवृत्ति-**
**र्नितम्बबिम्बे च बबन्ध हारम् ।।७।।**

ख५. उपसर्जनस्यार्थस्य प्रधानतायाम् **उत्तंसः** ।

यथा-

**दीपयन्नथ नभः किरणौघैः**
**कुङ्कुमारुणपयोधरगौरः ।**
**हेमकुम्भ इव पूर्वपयोधे-**
**रुन्ममज्ज शनकैस्तुहिनांशुः ।।८।।**

अत्रार्थे-

**ततस्तमः श्यामलपट्टकञ्चुकं**
**विपाटयत् किञ्चिददृश्यतान्तरा ।**
**निशातरुण्याः स्थितशेषकुङ्कुम-**
**स्तनाभिरामं शकलं कलावतः ।।९।।**

ख६. तदेव वस्तूक्तिवशादन्यथा क्रियत इति **नटनेपथ्यम्** ।

यथा-

**आननेन्दुशशलक्ष्म कपोले**
**सादरं विरचितं तिलकं यत् ।**

**तत् प्रिये विरचितावधिभङ्गे**
**धौतमीक्षणजलैस्तरलाक्ष्याः ।।१०।।**

अत्रार्थे-

**शोकाश्रुभिर्वासरखण्डितानां**
**सिक्ताः कपोलेषु विलासिनीनाम् ।**
**कान्तेषु कालात्ययमाचरत्सु**
**स्वल्पायुषः पत्रलता बभूवुः ।।११।।**

ख७. परिकरसाम्ये सत्यपि परिकार्यस्यान्यथात्वाद**एकपरिकार्यः** ।

**अव्याद् गजेन्द्रवदनः स इमां त्रिलोकीं**
**यस्योद्गतेन गगने महता करेण ।**
**मूलावलग्नसितदन्तबिसाङ्कुरेण**
**नालायितं तपनबिम्बसरोरुहस्य ।।१२।।**

अत्रार्थे-

**सरलकरदण्डनालं गजवपुषः पुष्करं विभोर्जयति ।**
**मूलबिसकाण्डभूमौ यत्राभूदेकदंष्ट्रैव ।।१३।।**

ख८. विकृतेः प्रकृतिप्रापणं **प्रत्यापत्तिः** ।

यथा-

**रविसङ्क्रान्तसौभाग्यस्तुषाराविलमण्डलः ।**
**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।।१४।।**

अत्रार्थे-

**तस्याः प्रतिद्वन्द्विभवाद् विषादात्**
**सद्यो विमुक्तं मुखमाबभासे ।**
**निःश्वासबाष्पापगमे प्रपन्नः**
**प्रसादमात्मीयमिवात्मदर्शः ।।१५।।**

ता इमा आलेख्यप्रख्यस्य भिदाः । सोऽयमनुग्राह्यो मार्गः । आहुश्च -

**सोऽयं भणितिवैचित्र्यात् समस्तो वस्तुविस्तरः ।**
**नटवद् वर्णिकायोगादन्यथात्वमिवार्च्छति ।।१६।।**

**(ग)** अथ **तुल्यदेहितुल्यस्य** भिदाः ।

ग१. तस्यैव वस्तुनो विषयान्तरयोजनादन्यरूपापत्ति**र्विषयपरिवर्त्तः** ।

यथा-

**ये सीमन्तितगात्रभस्मरजसो ये कुम्भकद्वेषिणो**
**ये लीढाः श्रवणाश्रयेण फणिना ये चन्द्रशैत्यद्रुहः ।**
**ते कुप्यद्गिरिजाविभक्तवपुषश्चित्तव्यथासाक्षिणः**
**स्थाणोर्दक्षिणनासिकापुटभुवः श्वासानिलाः पान्तु वः ।।१७।।**

अत्रार्थे-

**ये कीर्णक्वथितोदराब्जमधवो ये म्लापितोरःस्रजो**
**ये तापात् तरलेन तल्पफणिना पीतप्रतीपोज्झिताः ।**
**ते राधास्मृतिसाक्षिणः कमलया सासूयमाकर्णिताः**
**गाढान्तर्दवथोः प्रतप्तसरलाः श्वासा हरेः पान्तु वः ।।१८।।**

ग२. द्विरूपस्य वस्तुनोऽन्यतमरूपोपादानं **द्वन्द्वविच्छित्तिः** । यथा-

**उत्क्लेशं केशबन्धः कुसुमशररिपोः कल्मषं वः स मुष्याद्**
**यत्रेन्दुं वीक्ष्य गङ्गाजलभरलुलितं बालभावादभूताम् ।**
**क्रौञ्चारातिश्च फाण्टस्फुरितशफरिकामोहलोलेक्षणश्रीः**
**सद्यः प्रोद्यन्मृणालीग्रहणरसलसत्पुष्करश्च द्विपास्यः ।।१९।।**

अत्रार्थे-

**दिश्याद् धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी**
**शाशाङ्की कलिका जलभ्रमिवशाद् द्रागदृष्टनष्टा सुखम् ।**
**यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन् फणालीं मुहु-**
**र्मुह्यल्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः ।।२०।।**

ग३. पूर्वार्थानामर्थान्तरैरन्तरणं **रत्नमाला** ।

यथा च-

**कपाले मार्जारः पय इति करांल्लेढि शशिनः**
**तरुच्छिद्रप्रोतान् विसमिति करेणुः कलयति ।**
**रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति**
**प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ।।२१।।**

अत्रार्थे-

**ज्योत्स्नार्चिर्दुग्धबुद्ध्या कवलितमसकृद् भाजने राजहंसैः**
**स्वांसे कर्पूरपांसुच्छुरणरभसतः सम्भृतं सुन्दरीभिः ।**
**पुम्भिर्व्यस्तं स्तनान्तात् सिचयमिति रहःसम्भ्रमे वल्लभानां**
**लीढं द्राक् सिन्धुवारेष्वभिनवसुमनोलम्पटैः षट्पदैश्च ।।२२।।**

ग४. सङ्ख्यावैषम्येणार्थप्रणयनं **सङ्ख्योल्लेखः** ।

यथा-

**नमन्नारायणच्छायाच्छुरिताः पादयोर्नखाः ।**
**त्वच्चन्द्रमिव सेवन्ते रुद्र ! रुद्रेन्दवो दश ।।२३।।**

अत्रार्थे-

**उमैकपादाम्बुरुहे स्फुरन्नखे**
**कृतागसो यस्य शिरःसमागमे ।**
**षडात्मतामाश्रयतीव चन्द्रमाः**
**स नीलकण्ठः प्रियमातनोतु वः ।।२४।।**

ग५. सममभिधायाधिकस्योपन्यासश्**चूलिका** ।

द्विधा च सा संवादिनी विसंवादिनी च ।

तयोः प्रथमा यथा-

**अङ्गणे शशिमरीचिलेपने**
**सुप्तमिन्दुकरपुञ्जसन्निभम् ।**
**राजहंसमसमीक्ष्य कातरा**
**रौति हंसवनिताश्रुगद्गदम् ।।२५।।**

अत्रार्थे-

**चन्द्रप्रभाप्रसरहासिनि सौधपृष्ठे**
**दुर्लक्षपक्षतिपुटां न विवेद जायाम् ।**
**मूढश्रुतिर्मुखर-नूपुरनिःस्वनेन**
**व्याहारिणीमपि पुरो गृहराजहंसः ।।२६।।**

द्वितीया तत्रैवार्थे यथा-

**ज्योत्स्नाजलस्नायिनि सौधपृष्ठे**
**विविक्तमुक्ताफलपुञ्जगौरम् ।**
**विवेद हंसी दयितं कथञ्चि-**
**च्चलत्तुलाकोटिकलैर्निनादैः ।।२७।।**

ग६. निषेधस्य विधिना निबन्धो **विधानापहारः** ।

यथा-

**कुरबक ! कुचाघातक्रीडारसेन वियुज्यसे**
**वकुलविटपिन् ! स्मर्त्तव्यं ते मुखासवसेचनम् ।**

**चरणघटनाशून्यो यास्यस्यशोक ! सशोकता-**
**मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ।।२८।।**

अत्रार्थे-

**मुखमदिरया पादन्यासैर्विलासविलोकितै-**
**र्बकुलविटपी रक्ताशोकस्तथा तिलकद्रुमः ।**
**जलनिधितटीकान्ताराणां क्रमात् ककुभां जये**
**झगिति गमिता यद्वर्ग्याभिर्विकासमहोत्सवम् ।।२९।।**

ग७. बहूनामर्थानामेकत्रोपसंहारो **माणिक्यपुञ्जः** ।

यथा-

**शैलच्छलेन स्वं दीर्घं भुजमुत्तम्य भूवधूः ।**
**निशासख्याः करोतीव शशाङ्कतिलकं मुखे ।।३०।।**

यथा च-

**फुल्लातिमुक्तकुसुमस्तबकाभिराम-**
**दूरोल्लसत्किरणकेसरमिन्दुसिंहम् ।**
**दृष्ट्वोदयाद्रिशिखरस्थितमन्धकार-**
**दुर्वारवारणघटा व्यघटन्त सद्यः ।।३१।।**

यथा च-

**संविधातुमभिषेकमुदासे**
**मन्मथस्य लसदंशुजलौघः ।**
**यामिनीवनितया ततचिह्नः**
**सोत्पलो रजतकुम्भ इवेन्दुः ।।३२।।**

यथा च-

**उदयति पश्य कृशोदरि! दलितत्वक्क्षीरसरणिभिः किरणैः ।**
**उदयाचलचूडामणिरेष पुरो रोहिणीरमणः ।।३३।।**

यथा च-

**उदयति नवनीतपिण्डपाण्डुः कुमुदवनान्यवघट्टयन् कराग्रैः ।**
**उदयगिरितटस्फुटाट्टहासो रजनिवधूमुखदर्पणः शशाङ्कः ।।३४।।**

यथा च-

**प्रोषितैकेन्दुहंसेऽस्मिन् सस्नाविव तमोऽम्बुभिः ।**
**नभस्तडागे मदनस्ताराकुमुदहासिनि ।।३५।।**

अत्रार्थे-

**रजनिपुरन्ध्रिरोध्रतिलकस्तिमिरद्विपयूथकेसरी**
**रजतमयोऽभिषेककलशः कुसुमायुधमेदिनीपतेः ।**
**अयमुदयाचलैकचूडामणिरभिनवदर्पणो दिशा-**
**मुदयति गगनसरसि हंसस्य हसन्निव विभ्रमं शशी ।।३६।।**

ग८. कन्दभूतोऽर्थः कन्दलायमानैर्विशेषैरभिधीयते इति **कन्दः** ।

यथा-

**विशिखामुखेषु विसरति पुञ्जीभवतीव सौधशिखरेषु ।**
**कुमुदाकरेषु विकसति शशिकलशपरिस्रुता ज्योत्स्ना ।।३७।।**

अत्रार्थे-

**वियति विसर्पतीव, कुमुदेषु बहूभवतीव, योषितां**
**प्रतिफलतीव जरठशरकाण्डपाण्डुषु गण्डभित्तिषु ।**
**अम्भसि विकसतीव, लसतीव सुधाधवलेषु धामसु,**
**ध्वजपटपल्लवेषु लसतीव समीरचलेषु चन्द्रिका ।।३८।।**

**स्फटिकमणिघट इवेन्दुस्तस्यामपिधानमाननमिवाङ्कः ।**
**क्षरति चिरं तेन यथा ज्योत्स्ना घनसारधूलिरिव ।।३९।।**

**सितमणिकलशादिन्दोर्हरिणहरित्तृणपिधानतो गलितैः ।**
**रजनिभुजिष्या सिञ्चति नभोऽङ्गणं चन्द्रिकाम्भोभिः ।।४०।।**

**संविधातुमभिषेकमुदासे**
**मन्मथस्य लसदंशुजलौघः ।**
**यामिनीवनितया ततचिह्नः**
**सोत्पलो रजतकुम्भ इवेन्दुः ।।४१।।**

ता इमास्तुल्यदेहितुल्यस्य **परिसंख्याः** । 'सोऽयमुल्लेखवाननुग्राह्यो मार्गः' इति **सुरानन्दः** ।

तदाह-

**सरस्वती सा जयति प्रकामं**
**देवी श्रुतिः स्वस्त्ययनं कवीनाम् ।**
**अनर्घतामानयति स्वभङ्ग्या**
**योल्लिख्य यत्किञ्चिदिहार्थरत्नम् ।।४२।।**

(घ) अथ **परपुरप्रवेशसदृशस्य** भिदः ।

घ१. उपनिबद्धस्य वस्तुनो युक्तिमती परिवृत्तिर्**हुड्डयुद्धम्** । यथा-

**कथमसौ न भजत्वशरीरतां**
**हृतविवेकपदो हतमन्मथः ।**
**प्रहरतः कदलीदलकोमले**
**भवति यस्य दया न वधूजने ।।४३।।**

अत्रार्थे-

**कथमसौ मदनो न नमस्यतां**
**स्थितविवेकपदो मकरध्वजः ।**
**मृगदृशां कदलीललितं वपु-**
**र्यदभिहन्ति शरैः कुसुमोद्भवैः ।।४४।।**

घ२. प्रकारान्तरेण विसदृशं यद् वस्तु तस्य निबन्धः **प्रतिकञ्चुकम्** । यथा-

**माद्यच्चकोरेक्षणतुल्यधाम्नो**
**धारां दधाना मधुनः पतन्तीम् ।**
**चञ्च्वग्रदष्टोत्पलनालहृद्या**
**हंसीव रेजे शशिरत्नपारी ।।४५।।**

अत्रार्थे-

**मसारपारेण बभौ ददाना**
**काचित् सुरां विद्रुमनालकेन ।**
**वल्लूरवल्लीं दधतेव चञ्च्वा**
**केलीशुकेनाञ्जलिना धृतेन ।।४६।।**

घ३. उपमानस्योपमानान्तरपरिवृत्तिर्**वस्तुसञ्चारः** । यथा-

**अविरलमिव दाम्ना पौण्डरीकेण बद्धः**
**स्नपित इव च दुग्धस्रोतसा निर्भरेण ।**
**कवलित इव कृत्स्नश्चक्षुषा स्फारितेन**
**प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ।।४७।।**

अत्रार्थे-

**मुक्तानामिव रज्जवो हिमरुचेर्मालाः कलानामिव**
**क्षीराब्धेरिव वीचयः क्लममुषः पीयूषधारा इव ।**

**दीर्घापाङ्गनदीं विलङ्घ्य सहसा लीलानुभावाञ्चिताः**
**सद्यः प्रेमभरोल्लसा मृगदृशो मामभ्यषिञ्चन्दृशः ।।४८।।**

घ४. शब्दालङ्कारस्यार्थालङ्कारेणान्यथात्वं **धातुवादः** ।

यथा-

**जयन्ति बाणासुरमौलिलालिताः**
**दशास्यचूडामणिचक्रचुम्बिनः ।**
**सुरासुराधीशशिखान्तशायिनो**
**भवच्छिदस्त्र्यम्बकपादपांसवः ।।४९।।**

अत्रार्थे-

**सन्मार्गालोकनप्रौढिनिरजीकृतजन्तवः ।**
**जयन्त्यपूर्वव्यापाराः पुरारेः पादपांसवः ।।५०।।**

घ५. तस्यैव वस्तुन उत्कर्षेणान्यथाकरणं **सत्कारः** यथा-

**स्नानार्द्रैर्विधुतकबरीबन्धलोलैरिदानीं**
**श्रोणीभारः कृतपरिचयः पल्लवैः कुन्तलानाम् ।**
**अप्येतेभ्यो नभसि पततः पङ्क्तिशो वारिबिन्दून्**
**स्थित्वोद्ग्रीवं कुवलयदृशां केलिहंसाः पिबन्ति ।।५१।।**

अत्रार्थे-

**लक्ष्म्याः क्षीरनिधेरुदक्तवपुषो वेणीलताग्रच्युता**
**ये मुक्ताग्रथनामसूत्रसुभगाः प्राप्ताः पयोबिन्दवः ।**
**ते वः पान्तु विशेषसस्पृहदृशा दृष्टाश्चिरं शार्ङ्गिणा**
**हेलोद्ग्रीवजलेशहंसवनितालीढाः सुधास्वादवः ।।५२।।**

घ६. पूर्वं सदृशः पश्चाद्भिन्नो **जीवञ्जीवकः** ।

यथा-

**नयनोदरयोः कपोलभागे**
**रुचिमद् रत्नगणेषु भूषणेषु ।**
**सकलप्रतिबिम्बितेन्दुबिम्बा**
**शतचन्द्राभरणेव काचिदासीत् ।।५३।।**

अत्रार्थे-

**भास्वत्कपोलतलकुण्डलपारिहार्य-**
**सन्मेखलामणिगणप्रतिबिम्बितेन ।**

**चन्द्रेण भाति रमणी रमणीयवक्त्र-**
**शोभाभिभूतवपुषेव निषेव्यमाणा ।।५४।।**

घ७. प्राक्तनवाक्याभिप्रायनिबन्धो **भावमुद्रा** ।

यथा-

**ताम्बूलवल्लीपरिणद्धपूगा-**
**स्वेलालतालिङ्गितचन्दनासु ।**
**तमालपत्रास्तरणासु रन्तुं**
**प्रसीद शश्वन्मलयस्थलीषु ।।५५।।**

अत्रार्थे-

**निश्चेतनानामपि युक्तयोगदो**
**नूनं स एनं मदनोऽधितिष्ठति ।**
**एला यदाश्लिष्टवतीह चन्दनं**
**पूगद्रुमं नागलताधिरोहति ।।५६।।**

घ८. पूर्वार्थपरिपन्थिनी वस्तुरचना **तद्विरोधी** ।

यथा-

**हारो वक्षसि दन्तपत्रविशदं कर्णे दलं कौमुदं**
**माला मूर्ध्नि दुकूलिनी तनुलता कर्पूरशुक्लौ स्तनौ ।**
**वक्त्रे चन्दनबिन्दुरिन्दुधवलं बालं मृणालं करे**
**वेषः किं सित एष सुन्दरि शरच्चन्द्रात् त्वया शिक्षितः ।।५७।।**

अत्रार्थे-

**मूर्त्तिर्नीलदुकूलिनी मृगमदैः प्रत्यङ्गपत्रक्रिया**
**बाहू मेचकरत्नकङ्कणभृतौ कण्ठे मसारावली ।**
**व्यालम्बालकवल्लरीकमलिकं कान्ताभिसारोत्सवे**
**यत्सत्यं तमसा मृगाक्षि! विहितं वेषे तवाचार्यकम् ।।५८।।**

**इत्यर्थहरणोपाया द्वात्रिंशदुपदर्शिताः ।**
**हानोपादानविज्ञाने कवित्वं तत्र मां प्रति ।।५९।।**

**किं चैते हरणोपाया ज्ञेयाः सप्रतियोगिनः ।**
**अर्थस्य वैपरीत्येन विज्ञेया प्रतियोगिता ।।६०।।**

किञ्च-

**शब्दार्थशासनविदः कति नो कवन्ते**
**यद् वाङ्मयं श्रुतिघनस्य चकास्ति चक्षुः ।**
**किन्त्वस्ति यद्वचसि वस्तु नवं सदुक्ति-**
**सन्दर्भिणां स धुरि तस्य गिरः पवित्राः ।।६१।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे अर्थहरणेष्वालेख्यप्रख्यादिभेदास्त्र**त्रयोदशो**ऽध्यायः ॥१३॥

०००

---

## १२-१३ अध्याययोरेष सारः-

त्रिपथमर्थमध्यगीष्महि १. अन्ययोनिः २. निह्नुतयोनिः ३. अयोनिश्चेति।
चिन्तामणिरयोनिः लौकिकोऽलौकिको मिश्रश्चेति (पृष्ठं ७४) ।

**अन्ययोनिर्द्विविधः** **निह्नुतयोनिरपि द्विविधः**

| (क) | (ख) | (ग) | (घ) |
|---|---|---|---|
| १ प्रतिबिम्बकल्पः | २आलेख्यप्रख्यश्च | ३तुल्यदेहितुल्यः | ४परपुरप्रवेशसदृशश्च |
| (श्लोक३१०) | (श्लोक३१३) | (श्लोक३१५) | (श्लोक३१८) |
| १. व्यस्तकः | समक्रमः | विषयपरिवर्त्तः | हुड्डयुद्धम् |
| २. खण्डम् | विभूषणमोषः | द्वन्द्वविच्छित्तिः | प्रतिकञ्चुकम् |
| ३. तैलबिन्दुः | व्युत्क्रमः | रत्नमाला | वस्तुसञ्चारः |
| ४. नटनेपथ्यम् | विशेषोक्तिः | संख्योल्लेखः | धातुवादः |
| ५. छन्दोविनिमयः | उत्तंसः | चूलिका | सत्कारः |
| ६. हेतुव्यत्ययः | नटनेपथ्यम् | विधानापहारः | जीवञ्जीवकः |
| ७. सङ्क्रान्तम् | एकपरिकार्यः | माणिक्यपुञ्जः | भावमुद्रा |
| ८. सम्पुटः | प्रत्यापत्तिः | कन्दः | तद्विरोधी |

# चतुर्दशोऽध्यायः

## जातिद्रव्यक्रियासमयस्थापना

अशास्त्रीयमलौकिकं च परम्परायातं यमर्थमुपनिबध्नन्ति कवयः स **कविसमयः** ।

'नन्वेष दोषः कथङ्कारं पुनरुपनिबन्धनार्हः ?' इति आचार्याः ।

'कविमार्गानुग्राही कथमेष दोषः ?' इति यायावरीयः ।

'निमित्तं तर्हि वाच्यम्' इति आचार्याः ।

'इदमभिधीयते' इति यायावरीयः ।

"पूर्वे हि विद्वांसः सहस्रशाखं साङ्गं च वेदमवगाह्य, शास्त्राणि चावबुध्य, देशान्तराणि द्वीपान्तराणि च परिभ्रम्य, यानर्थानुपलभ्य प्रणीत-वन्तस्तेषां देशकालान्तरवशेन अन्यथात्वेऽपि तथात्वेनोपनिबन्धो यः स **कविसमयः** । कविसमयशब्दश्चायं मूलमपश्यद्भिः प्रयोगमात्रदर्शिभिः प्रयुक्तो रूढश्च ।"

"तत्र कश्चिदाद्यत्वेन व्यवस्थितः कविसमयेनार्थः, कश्चित् परस्परो-पक्रमार्थं स्वार्थाय धूर्त्तैः प्रवर्त्तितः ।"

"स च त्रिधा स्वर्ग्यो भौमः पातालीयश्च । स्वर्गपातालीययोर्भौमः प्रधानः । स हि महाविषयः । स च चतुर्द्धा जातिद्रव्यगुणक्रियारूपार्थ-तया । तेऽपि प्रत्येकं त्रिधा, असतो निबन्धनात्, सतोऽप्यनिबन्धनात्, नियमतश्च।"

तत्र सामान्यस्याऽसतो निबन्धनं यथा । नदीषु पद्मोत्पलादीनि, जलाशयमात्रेऽपि हंसादयो, यत्र तत्र पर्वतेषु सुवर्णरत्नादिकं च ।

१. **नदीपद्मानि** तथा-

**दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ।।१।।**

२. नदीनीलोत्पलानि-

**गगनगमनलीलालम्भितान् स्वेदबिन्दून्**
**मृदुभिरनिलवारैः खेचराणां हरन्तीम् ।**
**कुवलयवनकान्त्या जाह्नवीं सोऽभ्यपश्यद्**
**दिनपतिसुतयेव व्यक्तदन्ताङ्कपालीम् ।।२।।**

एवं नदीकुमुदाद्यपि ।

३. सलिलमात्रे हंसा यथा-

**आसीदस्ति भविष्यतीह स जनो धन्यो धनी धार्मिको**
**यः श्रीकेशववत् करिष्यति पुनः श्रीमत्कुडङ्गेश्वरम् ।**
**हेलान्दोलितहंससारसकुलक्रेङ्कारसम्मूर्च्छितै-**
**रित्याघोषयतीव तन्नवनदी यच्चेष्टितं वारिभिः ।।३।।**

४. पर्वतमात्रे सुवर्णं यथा-

**नागावासश्चित्रपोताभिरामः**
**स्वर्णस्फीतिव्याप्तदिक्चक्रवालः ।**
**साम्यात् सख्यं जग्मिवानम्बुराशे-**
**रेष ख्यातस्तेन जीमूतभर्त्ता ।।४।।**

५. रत्नानि यथा-

**नीलाश्मरश्मिपटलानि महेभमुक्त-**
**सूत्कारसीकरविसृञ्जि तटान्तरेषु ।**
**आलोकयन्ति सरलीकृतकण्ठनालाः**
**सानन्दमम्बुदधियात्र मयूरनार्यः ।।५।।**

एवमन्यदपि ।

६. सतोऽप्यनिबन्धनम् । तद्यथा न मालती वसन्ते, न पुष्पफलं चन्दनद्रुमेषु, फलमशोकेषु ।

तत्र प्रथमः-

**मालतीविमुखश्चैत्रो विकासी पुष्पसम्पदाम् ।**
**आश्चर्यं जातिहीनस्य कथं सुमनसः प्रियाः ।।६।।**

द्वितीयः-

**यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः ।**
**निजवपुषैव परेषां तथापि सन्तापमपहरति ।।७।।**

तृतीयः-

**दैवायत्ते हि फले किं क्रियतामेतदत्र तु वदामः ।**
**नाशोकस्य किसलयैर्वृक्षान्तरपल्लवास्तुल्याः ॥८॥**

७. अनेकत्र प्रवृत्तवृत्तीनामेकत्राचरणं नियमः तद्यथा । समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि ।

तयोः प्रथमः- **गोत्राग्रहारं नयतो गृहत्वं**
**स्वनाममुद्राङ्कितमम्बुराशिम् ।**
**दायादवर्गेषु परिस्फुरत्सु**
**दंष्ट्रावलेपो मकरस्य वन्द्यः ॥९॥**

द्वितीयः-

**कामं भवन्तु सरितो भुवि सप्रतिष्ठाः**
**स्वादूनि सन्तु सलिलानि च शुक्तयश्च ।**
**एतां विहाय वरवर्णिनि! ताम्रपर्णी**
**नान्यत्र सम्भवति मौक्तिककामधेनुः ॥१०॥**

८. असतोऽपि द्रव्यस्य निबन्धनं तद्यथा । मुष्टिग्राह्यत्वं सूचीभेद्यत्वं च तमसः, कुम्भापवाह्यत्वं च ज्योत्स्नायाः ।

तत्र प्रथमम्-

**तनुलग्ना इव ककुभः भूवलयं चरणचारमात्रमिव ।**
**दिवमिव चाऽलिकदघ्नीं मुष्टिग्राह्यं तमः कुरुते ॥११॥**

यथा च-

**पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये ।**
**मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥१२॥**

द्वितीयम् -

**यन्त्रद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती**
**येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत् ।**
**उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः**
**पातव्या च शशिन्यमुग्धविभवे सा वर्त्तते चन्द्रिका ॥१३॥**

९. द्रव्यस्य सतोऽनिबन्धनं तद्यथा । कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य ।

तयोः प्रथमम् -

**ददृशाते जनैस्तत्र यात्रायां सकुतूहलैः ।**
**बलभद्रप्रलम्बघ्नौ पक्षाविव सितासितौ ।।१४।।**

द्वितीयम् -

**मासि मासि समा ज्योत्स्ना पक्षयोः शुक्लकृष्णयोः ।**
**तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ।।१५।।**

१०. द्रव्यनियमः तद्यथा । मलय एव चन्दनस्थानं, हिमवानेव भूर्जोत्पत्तिस्थानम् ।

तत्र प्रथमः-

**तापापहारचतुरो नागावासः सुरप्रियः ।**
**नाऽन्यत्र मलयादद्रेर्दृश्यते चन्दनद्रुमः ।।१६।।**

द्वितीयः- **न्यस्ताक्षरा धातुरसेन यत्र**
**भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणा-**
**मनङ्गलेखक्रिययोपयोगम् ।।१७।।**

११. प्रकीर्णकद्रव्यकविसमयस्तु तद्यथा । क्षीरक्षारसमुद्रयोरैक्यं, सागरमहासमुद्रयोश्च ।

तयोः प्रथमः-

**शेतां हरिर्भवतु रत्नमनन्तमन्त-**
**र्लक्ष्मीप्रसूतिरिति नो विविदामहे हे ।**
**हा दूरदूरसपयास्तृषितस्य जन्तोः**
**किं त्वत्र कूपपयसः स मरोर्जघन्यः ।।१८।।**

द्वितीयः-

**रङ्गत्तरङ्गभ्रूभङ्गैस्तर्जयन्तीमिवापगाः ।**
**स ददर्श पुरो गङ्गां सप्तसागरवल्लभाम् ।।१९।।**

१२. असतोऽपि क्रियार्थस्य निबन्धनं यथा । चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणं चकोराणां चन्द्रिकापानं च ।

तत्र प्रथमः-

**संक्षिपता यामवतीस्तटिनीनां तनयता पयःपूरान् ।**
**रथचरणाह्वयवयसां किं नोपकृतं निदाघेन ।।२०।।**

द्वितीय:-

**एतास्ता मलयोपकण्ठसरितामेणाक्षि! रोधोभुव-**
**श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।**
**यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः**
**पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकोराङ्गनाः ।।२१।।**

१३. सतोऽपि क्रियार्थस्यानिबन्धनं तद्यथा । दिवा नीलोत्पलानामविकासो, निशानिमित्तश्च शेफालिकाकुसुमानामविस्रंसः ।

तत्र प्रथमः-

**आलिख्य पत्रमसितागुरुणाभिरामं**
**रामामुखे क्षणसभाजितचन्द्रबिम्बे ।**
**जातः पुनर्विकसनावसरोऽयमस्ये-**
**त्युक्त्वा सखी कुवलयं श्रवणे चकार ।।२२।।**

द्वितीय:-

**त्वद्विप्रयोगे किरणैस्तथोग्रै-**
**र्दग्धाऽस्मि कृत्स्नं दिवसं सवित्रा ।**
**इतीव दुःखं शशिने गदन्ती**
**शेफालिका रोदिति पुष्पबाष्पैः ।।२३।।**

१४. नियमस्तु तद् यथा । ग्रीष्मादौ सम्भवतोऽपि कोकिलानां विरुतस्य वसन्त एव, मयूराणां वर्षास्वेव विरुतस्य नृत्तस्य च निबन्धः ।

तयोः प्रथमः-

**वसन्ते शीतभीतेन कोकिलेन वने रुतम् ।**
**अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः ।।२४।।**

द्वितीय:-

**मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।**
**कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ।।२५।।**

**कवीनां समयः सोऽयं जातिद्रव्यक्रियागतः ।**
**गुणस्यैष ततः स्वर्ग्यः पातालीयश्च कथ्यते ।।२६।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे जातिद्रव्यक्रियासमयस्थापना चतुर्दशोऽध्यायः ।।१४।।

०००

## पञ्चदशोऽध्यायः

### गुणसमयस्थापना

असतो गुणस्य निबन्धनं यथा, यशोहासप्रभृतेः शौक्ल्यम्, अयशसः पापप्रभृतेश्च कार्ष्ण्यं, क्रोधानुरागप्रभृतेश्च रक्तत्वम् ।

१. तत्र **यशःशौक्ल्यम्** -

**स्तेमः स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्ति-**
**र्मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः ।**
**इत्थं दिग्भित्तिरोधःक्षतविसरतया मांसलैस्त्वद्यशोभिः**
**स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ।।१।।**

२. **हासशौक्ल्यम्** -

**अट्टहासच्छलेनास्याद् यस्य फेनौधपाण्डुराः ।**
**जगत्क्षय इवापीताः क्षरन्ति क्षीरसागराः ।।२।।**

३. **अयशःकृष्णत्वम्** -

**प्रसरन्ति कीर्त्तयस्ते तव च रिपूणामकीर्त्तयो युगपत् ।**
**कुवलयदलसंवलिताः प्रतिदिनमिव मालतीमालाः ।।३।।**

४. **पापकार्ष्ण्यम्** -

**उत्खातनिर्मलमयूखकृपाणलेखा-**
**श्यामायिता तनुरभूद्धयकन्धरस्य ।**
**सद्यःप्रकोपकृतकेशववंशनाश-**
**सङ्कल्पसंजनितपापमलीमसेव ।।४।।**

५. **क्रोधरक्तता** -

**आस्थानकुट्टिमतलप्रतिबिम्बितेन**
**कोपप्रभाप्रसरपाटलविग्रहेण ।**
**भौमेन मूर्च्छितरसातलकुक्षिभाजा**
**भूमिश्चचाल चलतोदरवर्त्तिनेव ।।५।।**

६. **अनुरागरक्तता** यथा-

**गुणानुरागमिश्रेण यशसा तव सर्पता ।**
**दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ।।६।।**

७. सतोऽपि गुणस्यानिबन्धनम् । कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वं, कमलमुकुलप्रभृतेश्च हरितत्वं, प्रियङ्गुपुष्पाणां च पीतत्वम् ।

८. कुन्दकुड्मलाद्यरक्तता-

**द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।**
**स्नपितेवाभवत् तस्य शुद्धवर्णा सरस्वती ।।७।।**

९. पद्ममुकुलाहरितत्वम्-

**उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया**
**मग्नां लावणसैन्धवेऽम्भसि महीमुद्यच्छतो हेलया ।**
**तत्कालाऽऽकुल-देवदानवकुलैरुत्ताल-कोलाहलं**
**शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः ।।८।।**

१०. प्रियङ्गुपुष्पापीतत्वम् -

**प्रियङ्गुश्याममम्भोधिरान्ध्रीणां स्तनमण्डलम् ।**
**अलङ्कर्तुमिव स्वच्छाः सूते मौक्तिकसम्पदः ।।९।।**

गुणनियमस्तु तद् यथा, सामान्योपादाने माणिक्यानां शोणता, पुष्पाणां शुक्लता, मेघानां कृष्णता च ।

११. तत्र प्रथमः-

**सांयात्रिकैरविरतोपहृतानि कूटैः**
**श्यामासु तीरघनराजिषु सम्भृतानि ।**
**रत्नानि ते दधति कच्चिदिहायताक्षि !**
**मेघोदरोदितदिनाधिपबिम्बशङ्काम् ।।१०।।**

१२. पुष्पशुक्लता-

**पुष्पं प्रवालोपहितं यदि स्या-**
**न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।**
**ततोऽनुकुर्याद् विशदस्य तस्या-**
**स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ।।११।।**

१३. मेघकार्ष्ण्यम् -

**मेघश्यामेन रामेण पूतवेदिर्विमानराट् ।**
**मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ ।।१२।।**

कृष्णनीलयोः, कृष्णहरितयोः, कृष्णश्यामयोः, पीतरक्तयोः, शुक्ल-गौरयोरेकत्वेन निबन्धनं च कविसमयः ।

१४. कृष्णनीलयोरैक्यम् -

**नदीं तूर्णं कर्णोऽप्यनुसृतपुलिनां दाक्षिणात्याङ्गनाभिः**
**समुत्तीर्णो वर्णामुभयतटबलाबद्धवानीरहाराम् ।**
**तटे सह्यस्योच्चैः स्वसलिलनिवहो भाति नीलः स यस्याः**
**प्रियस्यांशे पीने लुलित इव घनः केशपाशः सुकेश्याः ।।१३।।**

१५. कृष्णहरितयोरैक्यम् -

**मरकतसदृशं च यामुनं**
**स्फटिकशिलाविमलं च जाह्नवम् ।**
**तदुभयमुदकं पुनातु वो**
**हरिहरयोरिव सङ्गतं वपुः ।।१४।।**

१६. कृष्णश्यामलयोरैक्यम् -

**एतत् सुन्दरि नन्दनं शशिमणिस्निग्धालवालद्रुमं**
**मन्दाकिन्यभिषिक्तमौक्तिकशिले मेरोस्तटे नन्दति ।**
**यत्र श्यामनिशासु मुञ्चति मिलन्मन्दप्रदोषानिला-**
**मुद्दामामरयोषितामभिरतं कल्पद्रुमश्चन्द्रिकाम् ।।१५।।**

१७. पीतरक्तयोरैक्यम् -

**लेखया विमलविद्रुमभासा सन्ततं तिमिरमिन्दुरुदासे ।**
**दंष्ट्रया कनकभङ्गपिशङ्ग्या मण्डलं भुव इवादिवराहः ।।१६।।**

शुक्लगौरयोरैक्यम् -

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।**
**अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भपुत्रम्[1] ।।१७।।**

एवं वर्णान्तररेष्वपि । चक्षुरादेरनेकवर्णोपवर्णनम् ।

---

१. मित्रमिति प्रसिद्धम् ।

१८. तत्र चक्षुषः शुक्लता-

**तिष्ठन्त्या जनसङ्कुलेऽपि सुदृशा सायं गृहप्राङ्गणे**
**तद्द्वारं मयि निःसहालसतनौ वीङ्खामृदु प्रेङ्खति ।**
**ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे**
**प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ।।१८।।**

१९. श्यामता-

**अथ पथि गमयित्वा रम्यक्लृप्तोपकार्ये**
**कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।**
**पुनरविशदयोध्यां मैथिलीदर्शिनीनां**
**कुवलयितगवाक्षां लोचनैरङ्गनानाम् ।।१९।।**

२०. कृष्णता-

**पादन्यासक्वणितरशनास्तत्र लीलावधूतै**
**रत्नच्छायाखचितबलिभिश्चामरैः क्लान्तहस्ताः ।**
**वेश्यास्त्वत्तो नखपदसुखन् प्राप्य वर्षाग्रबिन्दू-**
**नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ।।२०।।**

२१. मिश्रवर्णता-

**तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां**
**पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ।**
**कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं**
**पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ।।२१।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे गुणसमयस्थापना पञ्चदशोऽध्यायः ।।१५।।

०००

# षोडशोऽध्यायः

## स्वर्ग्यपातालीयकविरहस्यस्थापना

भौमवत् स्वर्ग्योऽपि कविसमयः । विशेषस्तु

१. चन्द्रमसि शशहरिणयोरैक्यम् ।

यथा-

**मा भैः शशाङ्क मम सीधुनि नास्ति राहुः**
**खे रोहिणी वसति कातर! किं बिभेषि ।**
**प्रायो विदग्धवनितानवसङ्गमेषु**
**पुंसां मनः प्रचलतीति किमत्र चित्रम् ।।१।।**

यथा च-

**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।**
**केसरी निष्ठुराक्षिप्तमृगयूथो मृगाधिपः ।।२।।**

२. कामकेतने मकरमत्स्ययोरैक्यं यथा-

**चापं पुष्पमयं गृहाण मकरः केतुः समुच्छ्रीयतां**
**चेतोलक्ष्यभिदश्च पञ्च विशिखाः पाणौ पुनः सन्तु ते ।**
**दग्धा कापि तवाकृतेः प्रतिकृतिः कामोऽसि किं गूहसे**
**रूपं दर्शय नाऽत्र शङ्करभयं सर्वे वयं वैष्णवाः ।।३।।**

यथा च-

**मीनध्वजस्त्वमसि नो न च पुष्पधन्वा**
**केलिप्रकाश तव मन्मथता तथापि ।**
**इत्थं त्वया विरहितस्य मयोपलब्धाः**
**कान्ताजनस्य जननाथ! चिरं विलापाः ।।४।।**

यथा वा-

**आपातमारुतविलोडितसिन्धुनाथो**
**हात्कारभीतपरिवर्त्तितभत्स्यचिह्नाम् ।**

**उल्लङ्घ्य यादवमहोदधिभीमवेलां**
**द्रोणाचलं पवनसूनुरिवोद्धरामि ।।५।।**

३. अत्रिनेत्रसमुद्रोत्पन्नचन्द्रयोरैक्यम् -

**वन्द्या विश्वसृजो युगादिगुरवः स्वायम्भुवाः सप्त ये**
**तत्रात्रिर्दिवि सन्दधे नयनजं ज्योतिः स चन्द्रोऽभवत् ।**
**एका यस्य शिखण्डमण्डनमणिर्देवस्य शम्भोः कला**
**शेषाभ्योऽमृतमाप्नुवन्ति च सदा स्वाहास्वधाजीविनः ।।६।।**

४. बहुकालजन्मनोऽपि शिवचन्द्रमसो बालत्वम् । यथा-

**मालायमानामरसिन्धुहंसः**
**कोटीरवल्लीकुसुमं भवस्य ।**
**दाक्षायणीबिभ्रमदर्पणश्री**
**बालेन्दुखण्डं भवतः पुनीतात् ।।७।।**

५. कामस्य मूर्त्तत्वं च यथा-

**अयं स भुवनत्रयप्रथितसंयमः शङ्करो**
**बिभर्त्ति वपुषाधुना विरहकातरः कामिनीम् ।**
**अनेन किल निर्जिता वयमिति प्रियायाः करं**
**करेण परिताडयञ्जयति जातहासः स्मरः ।।८।।**

यथा च-

**धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला**
**मनोभेद्यं शब्दप्रभृति य इमे पञ्च विशिखाः ।**
**इयान् जेतुं यस्य त्रिभुवनमनङ्गस्य विभवः**
**स वः कामः कामान् दिशतु दयितापाङ्गवसतिः ।।९।।**

६. द्वादशानामप्यादित्यानामैक्यम् -

**यस्याधोऽधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वै-**
**रावृत्तालातलीलां रचयति रयतो मण्डलं चण्डधाम्नः ।**
**सोऽव्यादुत्तप्तकार्त्तस्वरसरलशरस्पर्द्धिभिर्द्धामदण्डै-**
**रुद्दण्डैः प्रापयन् वः प्रचुरतमतमःस्तोममस्तं समस्तम् ।।१०।।**

७. नारायणमाधवयोश्च यथा-

**येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो**
**यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।**

**यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः**
**सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधवः ।।११।।**

८. एवं दामोदरशेषकूर्मादिः कमलासम्पदोश्च । यथा-

**दोर्मन्दीरितमन्दरेण जलधेरुत्थापिता या स्वयं**
**यां भूत्वा कमठः पुराणककुदन्यस्तामुदस्तम्भयत् ।**
**तां लक्ष्मीं पुरुषोत्तमः पुनरसौ लीलाञ्चितभ्रूलता-**
**निर्देशैः समवीविशत् प्रणयिनां गेहेषु दोष्णि क्षितिम् ।।१२।।**

भौमस्वर्ग्यवत् **पातालीयोऽपि कविसमयः ।**

९. तत्र नागसर्पयोरैक्यम् -

**हे नागराज बहुमस्य नितम्बभागं**
**भोगेन गाढमभिवेष्टय मन्दराद्रेः ।**
**सोढाविषह्यवृषवाहनयोगलीला-**
**पर्यङ्कबन्धनविधेस्तव कोऽतिभारः ।।१३।।**

१०. दैत्यदानवासुराणामैक्यम्, यथा तत्र हिरण्याक्षहिरण्यकशिपुप्रह्लाद-विरोचनबलिबाणादयो दैत्याः, विप्रचित्तिशम्बरनमुचिपुलोमप्रभृतयो दानवाः बलवृत्रविक्षुरस्त वृषपर्वादयोऽसुराः ।
तेषामैक्यं यथा-

**जयन्ति बाणासुरमौलिलालिता**
**दशास्यचूडामणिचक्रचुम्बिनः ।**
**सुरासुराधीशशिखान्तशायिनो**
**भवच्छिदस्त्र्यम्बकपादपांसवः ।।१४।।**

यथा च-

**तं शम्बरासुरशराशनिशल्यसारं**
**केयूररत्नकिरणारुणबाहुदण्डम् ।**
**पीनांसलग्नदयिताकुचपत्रभङ्ग-**
**मीनध्वजं जितजगत्त्रितयं जयेत् कः ।।१५।।**

यथा च -

**अस्ति दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।**
**प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ।।१६।।**

यथा च हयग्रीवं प्रति-

**दानवाधिपते! भूयो भुजोऽयं किं न नीयते ।**
**सहायतां कृतान्तस्य क्षयाभिप्रायसिद्धिषु ।।१७।।**

यथा च-

**महासुरसमाजेऽस्मिन् न चैकोऽप्यस्ति सोऽसुरः ।**
**यस्य नाशनिनिष्पेषनीराजितमुरःस्थलम् ।।१८।।**

एवमन्येऽपि भेदाः ।

**सोऽयं कवीनां समयः काव्ये सुप्त इव स्थितः ।**
**स साम्प्रतमिहास्माभिर्यथाबुद्धि विबोधितः ।।१९।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे स्वर्ग्यपातालीयकविरहस्यस्थापना **षोडशो**ऽध्यायः ।।१६।।

०००

# सप्तदशोऽध्यायः

## देशविभागः

देशं कालं च विभजमानः कविर्नार्थदर्शनदिशि दरिद्राति ।

जगज्जगदेकदेशाश्च **देशः** ।

१. द्यावापृथिव्यात्मकमेकं जगदित्येके । तदाहुः-

**हलमगु बलस्यैकोऽनड्वान् हरस्य न लाङ्गलं**
**क्रमपरिमिता भूमिर्विष्णोर्नगौर्न च लाङ्गलम् ।**
**प्रवहति कृषिर्नाद्याप्येषां द्वितीयगवं विना**
**जगति सकले नेदृग्दृष्टं दरिद्रकुटुम्बकम् ।।१।।**

२. 'दिवस्पृथिव्यौ द्वे जगती' इत्यपरे ।

तदाहुः-

**रुणद्धि रोदसी वास्य यावत् कीर्त्तिरनश्वरी ।**
**तावत् किलायमध्यास्ते सुकृती वैबुधं पदम् ।।२।।**

३. 'स्वर्ग्यमर्त्यपातालभेदात्त्रीणि जगन्ति' इत्येके ।

यदाहुः-

**त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।**
**त्वं चामरमरुद्भूमिरेको लोकत्रयायसे ।।३।।**

४. 'तान्येव भूर्भुवःस्वः' इत्यन्ये ।

तदाहुः-

**नमस्त्रिभुवनाभोगभृतिखेदभरादिव ।**
**नागनाथाङ्गपर्यङ्कशायिने शार्ङ्गधन्वने ।।४।।**

५. 'महर्जनस्तपः सत्यमित्येतैः सह सप्त' इत्यपरे ।

तदाहुः-

**संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः**
**संवाहिनी जलमुचां चलकेतुहस्तैः ।**

**हर्षस्य सप्तभुवनप्रथितोरुकीर्त्तेः**
**प्रासादपङ्क्तिरियमुच्छिखरा विभाति ।।५।।**

६. 'तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दश' इति केचित् ।
तदाहुः-

**निरवधि च निराश्रयं च यस्य**
**स्थितमनुवर्त्तितकौतुकप्रपञ्चम् ।**
**प्रथम इह भवान् स कूर्ममूर्त्ति-**
**र्जयति चतुर्द्दशलोकवल्लिकन्दः ।।६।।**

७. 'तानि सप्तभिः पातालैः सहैकविंशति' इति केचित् । तदाहुः-

**हरहासहरावासहरहारनिभप्रभाः ।**
**कीर्त्तयस्त्वलिम्पन्तु भुवनान्येकविंशतिम् ।।७।।**

८. 'सर्वमुपपन्नम्' इति यायावरीयः । अविशेषविवक्षा यदेकयति, विशेषविवक्षा त्वनेकयति । तेषु

९. भूर्लोकः पृथिवी । तत्र सप्त महाद्वीपाः । यथा-

**जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो**
**नाम्ना शाल्मलोऽतः कुशोऽतः ।**
**क्रौञ्चः शाकः पुष्करश्चेत्यथैषां**
**बाह्या बाह्या संस्थितिर्मण्डलीभिः ।।८।।**

**लावणो रसमयः सुरोदकः सार्पिषो द धिजलः पयःपयाः ।**
**स्वादुवारिरुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः ।।९।।**

१०. 'एक एवायं लावणः समुद्रः' इत्येके ।
तदाहुः-

**द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-**
**रेकोम्भोधिर्दिगन्तप्रविसृतसलिलः प्राज्यमेतत् सुराज्यम् ।**
**कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरवर्ये**
**चक्रे पुञ्जेन दातुं तदिदमिति धिया वेधसे यश्चुकोप।।१०।।**

११. 'त्रयः' इत्यन्ये ।
तदाहुः-

**आकम्पितक्षितिभृता महता निकामं**
**हेलाभिभूतजलधित्रितयेन यस्य ।**

**वीर्येण संहतिभिदा विहतोन्नतेन**
**कल्पान्तकालविसृतः पवनोऽनुचक्रे ।।११।।**

यथा वा-

**मातङ्गानामभावे मदमलिनमुखैः प्राप्तमाशाकरीन्द्रैः**
**जाते रत्नापहारे दिशि दिशि ततयो भान्ति चिन्तामणीनाम् ।**
**छिन्नेषूद्यानवापीतरुषु विरचिताः कल्पवृक्षा रिपूणां**
**यस्योदञ्चत्त्रिवेलावलयफलभुजां मानसी सिद्धिरासीत् ।।१२।।**

१२. 'चत्वारः' इत्यपरे ।

तदाहुः-

**चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् ।**
**मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ।।१३।।**

१३. भिन्नाभिप्रायतया सर्वमुपपन्नम्' इति यायावरीयः ।

सप्तसमुद्रीवादिनस्तु शास्त्रादनपेता एव ।

तदाहुः-

**अगस्त्यचुलुकोच्छिष्टसप्तवारिधिवारिणि ।**
**मुहूर्त्तं केशवेनाऽपि तदन्तः स्त्रस्तरायितम् ।।१४।।**

**मध्ये जम्बूद्वीपमाद्यो गिरीणां**
**मेरुर्नाम्ना काञ्चनः शैलराजः ।**
**यो मूर्त्तानामौषधीनां निधानं**
**यश्चावासः सर्ववृन्दारकाणाम् ।।१५।।**

**तमेनमवधीकृत्य देवेनाम्बुजजन्मना ।**
**तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ।।१६।।**

स भगवान्मेरुराद्यो वर्षपर्वतः । तस्य चतुर्दिशमिलावृतं वर्षम् । **तस्योत्तरेण** त्रयो वर्षगिरयः, नीलः श्वेतः शृङ्गवांश्च । रम्यकं, हिरणमयम्, उत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि ।

दक्षिणेनापि त्रय एव (वर्षगिरयः) निषधो हेमकूटो हिमवांश्च । हरिवर्षं, किम्पुरुषं, भारतमिति च त्रीणि वर्षाणि ।

तत्रेदं भारतं वर्षमस्य च नव भेदाः - इन्द्रद्वीपः, कसेरुमान्, ताम्रपर्णो,

गभस्तिमान्, नागद्वीपः, सौम्यो, गन्धर्वो, वरुणः, कुमारीद्वीपश्चायं नवमः ।

पञ्चशतानि जलं, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात् समुद्रादद्रिराजं हिमवन्तं यावत् परस्परमगम्यास्ते ।

तान्येतानि यो जयति स **सम्राडि**त्युच्यते ।

कुमारीपुरात् प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्त्तिक्षेत्रम् । तां विजयमानश्चक्रवर्त्ती भवति ।

चक्रवर्त्तिचिह्नानि तु-

**चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।**
**प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्त्तिनाम् ।।१७।।**

अत्र च कुमारीद्वीपे-

**विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः ।**
**महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ।।१८।।**

तत्र विन्ध्यादयः प्रतीतस्वरूपा मलयविशेषास्तु चत्वारः ।

तेषु प्रथमः-(मलयः)

**आ मूलयष्टेः फणिवेष्टितानां सच्चन्दनानां जननन्दनानाम् ।**
**कक्कोलकैलामरिचैर्युतानां जातीतरूणां च स जन्मभूमिः ।।१९।।**

द्वितीयो (मलयः)-

**यस्योत्तमां मौक्तिककामधेनुरुपत्यकामर्चति ताम्रपर्णी ।**
**रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ।।२०।।**

**तत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र ।**
**मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन् घनसारवृक्षाः ।।२१।।**

तृतीयो (मलयः)-

**विलासभूमिः सकलामराणां**
**पदं नृणां गौर्मुनिपुङ्गवस्य ।**
**सदाफलैः पुष्पलताप्रवालै-**
**राश्चर्यमूलं मलयः स तत्र ।।२२।।**

चतुर्थो (मलयः)-

**सा तत्र चामीकररत्नचित्रैः**
**प्रासादमालावलभीविटङ्कैः ।**

**द्वारार्गलावद्धसुरेश्वराङ्का**
**लङ्केति या रावणराजधानी ।।२३।।**

**प्रवर्त्तते कोकिलनादहेतुः**
**पुष्पप्रसूः पञ्चमजन्मदायी ।**
**तेभ्यश्चतुर्भ्योऽपि वसन्तमित्र-**
**मुदङ्मुखो दक्षिणमातरिश्वा ।।२४।।**

**आर्यावर्त्तः** पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तर**मार्यावर्त्तः**। तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च । तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् ।

१. तत्र **वाराणस्याः पुरतः पूर्वदेशः** । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरविदेहनेपालपुण्ड्रप्राग्ज्योतिषतम्रलिप्तक मलदमल्लवर्त्तकसुह्मब्रह्मोत्तरप्रभृतयो जनपदाः । बृहद्गृहलोहितगिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलाहित्यौ नदौ । गङ्गाकरतोयाकपिशाद्याश्च नद्यः । लवलीग्रन्थिपर्णकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः ।

२. **माहिष्मत्याः** परतो **दक्षिणापथः** । यत्र महाराष्ट्रमाहिषकाश्मकविदर्भकुन्तलक्रथकैशिकसूर्पारक काञ्चीकेरलकावेरमुरलवानवासकसिंहलचोडदण्डकपाण्ड्यपल्लवगाङ्गनाशिक्य कौङ्कणकोल्लगिरिवल्लरप्रभृतयो जनपदाः । विन्ध्यदक्षिणपादमहेन्द्रमलयमेकलपालमञ्जरसह्यश्रीपर्वतादयः पर्वताः। नर्मदातापीपयोष्णीगोदावरीकावेरीभैमरथीवेणाकृष्णवेणावञ्जुरातुङ्गभद्राताम्रपर्ण्युत्पलावतीरावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मलयोत्पत्त्या व्याख्याता ।

३. **देवसभायाः** परतः **पश्चाद्देशः** । तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुकच्छकच्छीयानकर्त्तार्बुद-ब्राह्मणवाह-यवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभमाल्यशिखरार्बुदादयश्च पर्वताः । सरस्वतीश्वभ्रवतीवार्त्तघ्नीमहीहिडिम्बाद्या नद्यः । करीरपीलुगुग्गुलुखर्जूरकरभादीनामुत्पादः ।

४. **पृथूदकात्** परतः **उत्तरापथः** । यत्र शककेकयवोक्काणहूणबाणायुजकाम्बोजवाह्लीकवह्लवलिम्पाककुलूतकीरतङ्गणतुषारतुरुष्कबर्बरहरहूरबहुहुकसहुडहंसमार्गरमठकरकण्ठप्रभृतयो जनपदाः । हिमालयकलिन्देन्द्रकीलचन्द्राचलादयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनेरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैदूर्यतुरङ्गाणामुत्पादः ।

५. तेषां मध्ये **मध्यदेश** इति कविव्यवहारः । न चाऽयं नानुगन्ता शास्त्रार्थस्य । यदाहुः-

**हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ।।२५।।**

६. तत्र च ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धि-सिद्धमिति न निर्दिष्टम् ।

**द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा ।**
**नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ।।२६।।**

**अन्तर्वेदी**

७. 'विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तर**मन्तर्वेदी** । तदपेक्षया दिशो विभजेत' इति आचार्याः । तत्रापि **महोदयं** मूलमवधीकृत्य इति यायावरीयः ।

८. 'अनियतत्वाद्दिशामनिश्चितो दिग्विभाग' इत्येके । तथा हि यो **वामनस्वा**मिनः पूर्वः **ब्रह्मशि**लायाः पश्चिमः, यो **गाधिपुरस्य** दक्षिणः स **कालप्रिय**स्योत्तर इति ।

९. 'अवधिनिबन्धनमिदं रूपमितरत् त्वनियतमेव' इति यायावरीयः ।

१०. 'प्राच्यवाचीप्रतीच्युदीच्यः चतस्रो दिश' इत्येके । तदाहुः-

**चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।**
**विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ।।२७।।**

११. 'ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी चाष्टौ दिश' इत्येके । तदाहुः-

**एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-**
**र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।**
**युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-**
**र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितानां शतानि ।।२८।।**

१२. 'ब्राह्मी नागीया च द्वे ताभ्यां सह दशैता' इत्यपरे ।

तदाहुः-

**दशदिक्तटपर्यन्तसीमसङ्कटभूमिके ।**
**विषमा स्थूललक्ष्यस्य ब्रह्माण्डग्रामके स्थितिः ।।२९।।**

१३. सर्वमस्तु, विवक्षापरतन्त्रा हि दिशामियत्ता । तत्र चित्रास्वात्यन्तरे प्राची, तदनुसारेण प्रतीची, ध्रुवेणोदीची, तदनुसारेणावाची, अन्तरेषु विदिशः, ऊर्ध्वं ब्राह्मी, अधस्तान्नागीयेति ।

१४. द्विविधो व्यवहारः कवीनां प्राक्सिद्धो विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक्सिद्धे प्राची -

**द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-**
**र्ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।**
**यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्छन्द्रमाः**
**प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् ।।३०।।**

दक्षिणा-

**दक्षिणो दक्षिणामाशां यियासुः सोऽधिकं बभौ ।**
**जिहासुर्दक्षिणामाशां भगवानिव भास्करः ।।३१।।**

पश्चिमा-

**पश्य पश्चिमदिगन्तलम्बिना**
**निर्मितं मितकथे! विवस्वता ।**
**दीर्घया प्रतिमया सरोम्भस-**
**स्तापनीयमिव सेतुबन्धनम् ।।३२।।**

उत्तरा-

**अस्त्युत्तरस्यां दिशि देवतात्मा**
**हिमालयो नाम नगाधिराजः ।**
**पूर्वापरौ तोयनिधी वगाह्य**
**स्थितः पृथिव्या इव मानदण्डः ।।३३।।**

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ यथा-

**यादांसि हे चरत सङ्गतगोत्रतन्त्रं**
**पूर्वेण चन्दनगिरेरुत पश्चिमेन ।**
**नो चेन्निरन्तरधराधरसेतुसूति-**
**राकल्पमेष न विरंस्यति वो वियोगः ।।३४।।**

दक्षिणोत्तरो यथा-

**काञ्च्याः पुरो दक्षिणदिग्विभागे**
**तथोत्तरस्यां दिशि वारिराशेः ।**
**कर्णान्तचक्रीकृतचारुचापो**
**रत्या समं साधु वसत्यनङ्गः ।।३५।।**

१५. उत्तरादावप्युत्तरदिगभिधानं, अनुत्तरादावपि उत्तरदिगभिधानम् ।
तयोः प्रथमम् -

**तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं**
**दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।**
**यस्योद्याने कृतकतनयः कान्तया वर्द्धितो मे**
**हस्तप्राप्यस्तबकविनतो बालमन्दारवृक्षः ।।३६।।**

द्वितीयम् -

**सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी ।**
**पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ।।३७।।**

१६. एवं दिगन्तरेष्वपि । तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । साधारणं तूभयत्र लोकप्रसिद्धितश्च ।

१७. तद्वद्वर्णनियमः ।
तत्र पौरस्त्यानां श्यामो वर्णः, दाक्षिणात्यानां कृष्णः, पाश्चात्त्यानां पाण्डुः, उदीच्यानां गौरः, मध्यदेश्यानां कृष्णः श्यामो गौरश्च ।

पौरस्त्यश्यामता-

**श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु ।**
**चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति ।।३८।।**

दाक्षिणात्यकृष्णता-

**इदं भासां भर्त्तुर्द्रुतकनकगोलप्रतिकृति**
**क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।**
**अथैष प्राचीनः सरति [१]मुरलीगण्डमलिन-**
**स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ।।३९।।**

पाश्चात्त्यपाण्डुता-

---

१. मुरली मुरुचीति च नदीविशेषसंज्ञा रघु. ४.५५ अत्र पुनस्तत्तटीया स्त्री ।

**शाखास्मेरं मधुकवलनाकेलिलोलेक्षणानां**
**भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति ।**
**किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः**
**कान्तिः स्तोकं रचयति पदं नागवल्लिच्छदेषु ।।४०।।**

उदीच्यगौरता-

**पुष्पैः सम्प्रति काञ्चनारतरवः प्रत्यङ्गमालिङ्गिताः**
**वाह्लीकीदशनव्रणारुणतरैः पत्रैरशोकोऽञ्चितः ।**
**जातं चम्पकमप्युदीच्यललनालावण्यचौर्यक्षमं**
**माञ्जिष्ठैर्मुकुलैश्च पाटलतरोरन्यैव काचिल्लिपिः ।।४१।।**

यथा वा-

**काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु ।**
**द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णकम् ।।४२।।**

मध्यदेश्यकृष्णता यथा-

**युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः ।**
**पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ।।४३।।**

१८. तद्वन्मध्यदेश्यश्यामता । न च कविमार्गे श्यामकृष्णयोः पाण्डु-गौरयोर्वा महान् विशेष इति कविसमयेष्ववोचाम ।

मध्यदेश्यगौरता-

**तव नवनवनीतपिण्डगौरे प्रतिफलदुत्तरकोसलेन्द्रपुत्र्याः ।**
**अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ।।४४।।**

१९. विशेषस्तु पूर्वदेशे राजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः । एवं दक्षिणदेशेऽपि।

तत्र प्रथमः-

**कपोले जानक्याः करिकलभदन्तद्युतिमुषि**
**स्मरस्मेरः स्फारोड्डमरपुलके वक्त्रकमलम् ।**
**मुहुः पश्यञ्छृण्वन् रजनिचरसेनाकलकलं**
**जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ।।४५।।**

द्वितीयः-

**तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम् ।**
**शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ।।४६।।**

एवमन्यदपि यथासम्भवमभ्यूह्यम् ।

**निगदितनयविपरीतं देशविरुद्धं वदन्ति विद्वांसः ।**
**तत्परिहार्यं यत्नात् तदुदाहृतयस्तु दोषेषु ।।४७।।**

**इत्थं देशविभागो मुद्रामात्रेण सूत्रितः सुधियाम् ।**
**यस्तु जिगीषत्यधिकं पश्यतु मद्भुवनकोशमसौ ।।४८।।**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे देशविभागः **सप्तदशो**ऽध्यायः ।।१७।।

०००

# अष्टादशोऽध्यायः

## कालविभागः

**काष्ठा निमेषा दश पञ्च चैव**
**त्रिंशच्च काष्ठाः कथिताः कलेति ।**
**त्रिंशत्कलश्चैव भवेन्मुहूर्त्त-**
**स्तैस्त्रिंशता रात्र्यहनी समेतौ ।।१।।**

१. ते[१] च चैत्राश्वयुजमासयोर्भवतः । चैत्रात् परं प्रतिमासं **मौहूर्त्तिकी** दिवसवृद्धिः निशाहानिश्च त्रिमास्याः, ततः परं मौहूर्त्तिकी निशावृद्धिः दिवसहानिश्च। आश्वयुजात् परतः पुनरेतदेव विपरीतम् ।

राशितो राश्यन्तरसङ्क्रमणमुष्णभासो मासः, वर्षादि दक्षिणायनं, शिशिराद्युत्तरायणं, द्व्ययनः संवत्सर इति सौरं मानम् ।

पञ्चदशाहोरात्रः पक्षः । वर्द्धमानसोमः शुक्लो, वर्द्धमानकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अमुना च वेदोदितः कृत्स्नोऽपि क्रियाकल्पः ।

पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्त्तवासिनश्च कवयश्च मानमाश्रिताः । एवं च द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्त्तः संवत्सरः । स च चैत्रादिरिति दैवज्ञाः, श्रावणादिरिति लोकयात्रा-विदः । तत्र नभा नभस्यश्च वर्षाः, इष ऊर्जश्च शरत्, सहः सहस्यश्च हेमन्तः, तपस्तपस्यश्च शिशिरः, मधुर्माधवश्च वसन्तः, शुक्रः शुचिश्च ग्रीष्मः ।

तत्र 'वर्षासु पूर्वो वायुः' इति कवयः । 'पाश्चात्त्यः पौरस्त्यस्तु प्रतिहन्ता' इत्याचार्याः । तदाहुः-'पुरोवाताहता प्रावृट् पश्चाद्वाताहता शरत्' इति । तदाहुः-

**प्रावृष्यम्भोभृताम्भोद-भरनिर्भरमम्बरम् ।**
**कदम्बकुसुमामोदा वायवो वान्ति वारुणाः ।।२।।**

---

१. ते रात्र्यहनीः ।

३. 'वस्तुवृत्तिरतन्त्रं, कविसमयः प्रमाणम्' इति यायावरीयः ।

तदाहुः-

**पौरस्त्यस्तोयदर्त्तोः पवन इव पतन् पावकस्येव धूमो**
**विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः ।**
**सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः**
**सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ।।३।।**

४. शरद्यनियतदिक्को वायुर्यथा-

**उषःसु ववुराकृष्टजडावश्यायशीकराः ।**
**शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ।।४।।**

५. 'हेमन्ते पाश्चात्त्यो वायुः' इत्येके । 'उदीच्य' इत्यपरे । 'उभयमपि' इति यायावरीयः ।

तयोः पाश्चात्त्यः-

**भञ्जन्भूर्जद्रुमालीस्तुहिनगिरितटेषूद्गतास्त्वक्करला**
**रेवाम्भःस्थूलवीचीचयचकितचलच्चातकान् व्याधुनानः ।**
**पाश्चात्त्यो वाति वेगाद् द्रुततुहिनशिलाशीकारासारवर्षी**
**मातङ्गक्षुण्णसान्द्रस्नुतसरलतरत्सारसारी समीरः ।।५।।**

उदीच्यः-

**लम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकांल्लासयन्तः**
**चुम्बन्तश्चन्द्रभागासलिलमविकलं भूर्जकाण्डैकचण्डाः ।**
**एते कस्तूरिकैणप्रणयसुरभयो वल्लभा वाह्लवीनां**
**कौलूतीकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः ।।६।।**

६. शिशिरेऽपि हेमन्तवदुदीच्यः पाश्चात्त्यो वा । वसन्ते दक्षिणः । तदुक्तम्-

**धुन्वंल्लङ्कावनालीर्मुहुरलकलता लासयन् केरलीना-**
**मन्ध्रीधम्मिल्लबन्धान् सपदि शिथिलयन् वेल्लयन्नागवल्लीः ।**
**उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः**
**प्रातः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीर ।।७।।**

७. 'अनियतदिक्को वायुर्ग्रीष्मे' इत्येके । 'नैर्ऋत' इत्यपरे । 'उभयमपि' इति यायावरीय । तत्र प्रथमः-

वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः
सङ्ग्रथ्नन्ति भविष्यदभ्रपटस्थूणावितर्कं नभः ।
किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूत्रयन्ति दिवसेष्वागामिनीं सम्पदम् ।।८।।

द्वितीयः-

सोऽयं करैस्तपति वह्निमयैरिवार्कः
साङ्गारविस्तरभरेव धरा समग्रा ।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च
कार्शानवैरिव शरैर्मदनश्च हन्ति ।।९।।

किञ्च-

गर्भान् बलाकासु निवेशयन्तः
वंशाङ्कुरान् स्वैर्निनदैः सृजन्तः ।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो
यात्रोद्यमं भूमिभृतां हरन्ति ।।१०।।

स सल्लकीसालशिलीन्ध्रयूथी-
प्रसूनदः पुष्पितलाङ्गलीकः ।
दग्धोर्वरासुन्दरगन्धबन्धु-
रर्घत्ययं वारिमुचामनेहा ।।११।।

वनानि नीलीदलमेचकानि
धाराम्बुधौता गिरयः स्फुरन्ति ।
पूराम्भसा भिन्नतटास्तटिन्यः
सान्द्रेन्द्रगोपानि च शाद्वलानि ।।१२।।

चकोरहर्षी यतिचारचौरो
वियोगिनीवीक्षितनाथवर्त्मा ।
गृहान् प्रति प्रस्थितपान्थसार्थः
कालोऽयमाध्मातनभाः पयोदैः ।।१३।।

या केलियात्रा करिकामिनीभि-
र्या तुङ्गहर्म्याग्रविलासशय्या ।
चतुःसमं यन्मृगनाभिगर्भं
सा वारिदर्त्तौः प्रथमातिथेयी ।।१४।।

चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।
शिखण्डिकुलताण्डवामुदितमद्गुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ।।१५।।

दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
धवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरक-
श्चलन्निचुलसञ्चयो हरति हन्त घर्मात्ययः ।।वर्षाः।।१६।।

द्राग्गर्जयन्ती विमदान्मयूरान्
प्रगल्भयन्ती कुररद्विरेफान् ।
शरत् समभ्येति विकास्य पद्मा-
नुन्मीलयन्ती कुमुदोत्पलानि ।।१७।।

सा भाति पुष्पाणि निवेशयन्ती
बन्धूकबाणासनकुङ्कुमेषु ।
शेफालिकासप्तपलाशकाश-
भाण्डीरसौगन्धिकमालतीषु ।।१८।।

सखञ्जरीटा सपयःप्रसादा
सा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाक-
ससारसक्रौञ्चकुलानुयाता ।।१९।।

उपानयन्ती कलहंसयूथ-
मगस्त्यदृष्ट्या पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं
शरद् विचित्रैश्चरितैश्चकास्ति ।।२०।।

क्षितिं खनन्तो वृषभाः खुराग्रै
रोधो विषाणैर्द्विरदा रदन्तः ।
शृङ्गं त्यजन्तो रुरवश्च जीर्णं
कुर्वन्ति लोकानवलोकनोत्कान् ।।२१।।

अत्रावदातद्युति चन्द्रिकाम्बु
नीलावभासं च नभः समन्तात् ।
सुरेभवीथीदिवसावतारो
जीर्णाभ्रखण्डानि च पाण्डुराणि ।।२२।।

<u>महानवम्यां</u> निखिलास्त्रपूजा
नीराजना वाजिभटद्विपानाम् ।
<u>दीपालिकायां</u> विविधा विलासा
यात्रोन्मुखैरत्र नृपैर्विधेयाः ।।२३।।

व्योम्नि तारतरतारकोत्करः
स्यन्दनप्रचरणक्षमा मही ।
भास्करः शरदि दीप्रदीधिति-
<u>र्बुध्यते च</u> सह माधवः सुरैः ।।२४।।

केदार एव कलमाः परिणामरम्याः
प्राचीनमामलकमर्घति पाकनीलम् ।
एर्वारुकं स्फुटननिर्गतगर्भगन्ध-
मम्लीभवन्ति च जरत्त्रपुसीफलानि ।।२५।।

गेहाजिरेषु नवशालिकणावपात-
गन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूत-
पाणिस्खलद्वलयपद्धतयो वधूट्यः ।।२६।।

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव धर्मचिन्ता
कामी दरिद्र इव शोषमुपैति पङ्कम् ।।२७।।

नद्यो वहन्ति कुटिलक्रमयुक्तशुक्ति-
रेखाङ्कबालपुलिनोदरसुप्तकूर्माः ।
अस्यां तरङ्गितनुतोयपलायमान-
मीनानुसारिबकदन्तकरालफालाः ।।२८।।

अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
पतत्कुररकातरभ्रमदद‍भ्रमीनार्भकः ।
लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसञ्चयः शरदि मेदुरः सीदति ।।शरत्।

द्वित्रिमुचुकुन्दकलिक-
स्त्रिचतुरमुकुलः क्रमेण लवलीषु ।
पञ्चषफलिनीकुसुमो
जयति हिमर्त्तुर्नवावतरः ।।३०।।

पुन्नागरोध्रप्रसवावतंसा
वामभ्रुवः कञ्चुककुञ्चिताङ्ग्यः।
वक्रोल्लसत्कुङ्कुमसिक्थकाङ्काः
सुगन्धतैलाः कबरीर्वहन्ति ।।३१।।

यथा यथा पुष्यति शीतकाल-
स्तुषारचूर्णोत्करकीर्णवातः ।
तथा तथा यौवनशालिनीनां
कवोष्णतामत्र कुचा लभन्ते ।।३२।।

वराहवर्ध्राणि नवोदनानि
दधीनि सन्नद्धशराणि चाऽत्र ।
सुकोमलाः सर्षपकन्दलीश्च
भुक्त्वा जनो निन्दति वैद्यविद्याम् ।।३३।।

अत्रोपचारः सलिलैः कवोष्णै-
र्यत्किञ्चिदत्र स्वदतेऽन्नपानम् ।
सुदुर्भगामत्र निपीड्य शेते
स्वस्त्यस्तु नित्यं तुहिनर्त्तवेऽस्मै ।।३४।।

विमुक्तबर्हा विमदा मयूराः
प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं
हेमन्तलिङ्गानि जयन्त्यमूनि ।।३५।।

सशमीधान्यपाकानि क्षेत्राण्यत्र जयन्ति च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ।।३६।।

उद्यानानां मूकपुंस्कोकिलत्वं
भृङ्गस्त्रीणां मौनमुद्रा मुखेषु ।
मन्दोद्योगा पत्रिणां व्योमयात्रा
हेमन्ते स्यात् सर्पदर्पक्षयश्च ।।३७।।

कर्कन्धूनां नागरङ्गीफलानां
पाकोद्रेकः खाण्डवोऽप्याविरस्ति ।
कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे
माधुर्ये श्रीर्जायते चाप्यपूर्वा ।।३८।।

येषां मध्येमन्दिरं तल्पसम्पत्
पार्श्वे दाराः स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूम-
स्ते हेमन्तं ग्रीष्मशेषं विदन्ति ।।३९।।

इति हेमन्तः ।

८. हेमन्तधर्मा शिशिरः । विशेषस्तु-

रात्रिर्विचित्रसुरतोचितयामदैर्घ्या
चण्डो मरुद् वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा किमन्य-
दर्घन्ति चात्र विततागुरुधूपधूमाः ।।४०।।

आश्लेषिणः पृथुरतक्लमपीतशीत-
मायामिनीं घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोल-
पादान्तसंवलिततूलपटाः स्वपन्ति ।।४१।।

पानेऽम्भसोः सुरसनीरसयोर्न भाति
स्पर्शक्रियासु तुहिनानलयोर्न चाऽत्र ।
नो दुर्भगासुभगयोः परिरम्भणे च
नो सेवने च शशिभास्करयोर्विशेषः ।।४२।।

पुष्पक्रिया मरुबके जलकेलिनिन्दा
कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाद् भजतेऽर्कबिम्बं
काले तुषारिणि दहन्ति च चन्दनानि ।।४३।।

सिद्धार्थयष्टिषु यथोत्तरहीयमान-
सन्तानभिन्नघनसूचिपरम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण
पाकक्रमः कपिशिमानमुपादधाति ।।४४।।

उदीच्यचण्डानिलताडितासु
सुलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं
विलासवापीषु न याति दृष्टिः ।।४५।।

माद्यन्मतङ्गः पृषतैकतोषी
पुष्यद्वराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः सघनैकवन्द्यः
स एष कालः शिशिरः करालः ।।४६।।

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाऽद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्त्ति निशाकरः ।।४७।।

स्त्रियः प्रकृतिपित्तलाः क्वथितकुङ्कुमालेपनै-
र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः ।
इहाभिनवयौवनाः सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरारतिमतीव पृथ्वीमपि ।।शिशिरः।

चैत्रे मदर्द्धिः शुकसारिकाणां
हारीतदात्यूहमधुव्रतानाम् ।
पुंस्कोकिलानां सहकारबन्धु-
र्मदस्य कालः पुनरेष एव ।।४९।।

मनोऽधिकं चात्र विलासलास्ये
प्रेङ्खासु दोलासु च सुन्दरीणाम् ।
गीते च गौरीचरितावतंसे
पूजा प्रपञ्चे च मनोभवस्य ।।५०।।

पुंस्कोकिलः कूजति पञ्चमेन
बलाद् विलासा युवतौ स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः
स्वचापयष्टेर्घटनां करोति ।।५१।।

पिनद्धमाहारजनांशुकानां
सीमन्तसिन्दूरजुषां वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजां
विशेषवेषः स्वदते वधूनाम् ।।५२।।

अयं प्रसूनोद्धुरकर्णिकारः
पुष्पप्रपञ्चाञ्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः
कालो विकाशोद्यतसिन्दुवारः ।।५३।।

रोहीतकाम्रातककिङ्किराता
मधूकमोचाः सह माधवीभिः ।
जयन्ति शोभाञ्जनकश्च शाखी
सकेसरः पुष्पभरैर्वसन्ते ।।५४।।

यो माधवीमुकुलदृष्टिषु वेणिबन्धो
यः कोकिलाकलरुते कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य
तस्मिन् मधुः स भगवान् गुरुरङ्गनानाम् ।।५५।।

नालिङ्गितः कुरबकस्तिलको न दृष्टो
नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्तो न वक्त्रमधुना बकुलश्च चैत्रे
चित्रं तथापि भवति प्रसवावकीर्णः ।।५६।।

चैत्रे चित्रौ रक्तनीलावशोकौ
स्वर्णाशोकस्तत्तृतीयश्च पीतः ।
जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्य-
श्चेतोयोनेः भूर्भुवःस्वस्त्रयेऽपि ।।५७।।

गूवाकानां नालिकेरद्रुमाणां
हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूराणां ताडताडीतरूणां
पुष्पापीडन्यासहेतुर्वसन्तः ।।५८।।वसन्तः।

विकासकारी नवमल्लिकानां
दलच्छिरीषप्रसवाभिरामः ।
पुष्पप्रदः काञ्चनकेतकीनां
ग्रीष्मोऽयमुल्लासितधातकीकः ।।५९।।

खर्जूरजम्बूपनसाम्रमोचा
प्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतामुपास्य
रतानुसन्धानमिहाद्रियन्ते ।।६०।।

स्त्रोतांस्यनम्भांसि सकूपकानि
प्रपाः कठोरऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्थितसक्तुपाने
प्रगेच सायं च वहन्ति मार्गाः ।।६१।।

यत् कायमानेषु दिनार्द्धनिद्रा
यत् स्नानकेलिर्दिवसावसाने ।
यद् रात्रिशेषे सुरतावतारः
स मुष्टियोगो घनघर्ममाथी ।।६२।।

या चन्द्रिका चन्दनपङ्कहृद्या
या जालमार्गानिलवीचिमाला ।
या तालवृन्तैरुदबिन्दुवृष्टि-
र्जलाञ्जलिं सा शुचये ददाति ।।६३।।

कर्पूरचूर्णं सहकारभङ्ग-
स्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम् ।
हाराश्च तारास्तनुवस्त्रमेत-
न्महारहस्यं शिशिरक्रियायाः ।।६४।।

मुक्तालताश्चन्दनपङ्कदिग्धा
मृणालहारानुसृता जलार्द्राः ।
स्रजश्च मौलौ स्मितचम्पकानां
ग्रीष्मेऽपि सोऽयं शिशिरावतारः ।।६५।।

अत्र हि-

पच्यन्त इव भूतानि ताप्यन्त इव पांसवः ।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ।।६६।।

एणाः स्थलीषु मृगतृष्णिकया ह्रियन्ते
स्रोतस्तनुत्वजनिता जलवेणिबन्धाः ।
ताम्यत्तिमीनि च सरांसि जलस्य शोषा-
दुद्धारघट्टघटिकावलयाश्च कूपाः ।।६७।।

करभाः शरभाः सरासभा
मदमायान्ति भजन्ति विक्रियाम् ।
करवीरकरीरपुष्पिणीः
स्थलभूमीरधिरुह्य चासते ।।६८।।

सहकाररसाचिता रसाला
जलभक्तं फलपानकानि मन्थाः ।
मृगलावरसाः सृतं च दुग्धं
स्मरसञ्जीवनमौषधं निदाघे ।।६९।।

जडचन्दनचारवस्तरुण्यः
सजलार्द्राः सहतारहारमालाः ।
कदलीदलतल्पकल्पनस्थाः
स्मरमाहूय निवेशयन्ति पार्श्वे ।।७०।।

ग्रीष्मे चीरीनादवन्तो वनान्ताः
पङ्काभ्यक्ताः सैरिभाः सेभकोलाः ।

**लोलज्झिह्वाः सर्पसारङ्गवर्गा**
**मूलस्त्रस्तैः पत्रिणश्चांशदेशैः ।।७१।।**

**हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं**
**कान्तोच्छिष्टा वारुणी वारिमिश्रा ।**
**मालाः कण्ठे पाटला मल्लिकानां**
**सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ।।७२।।ग्रीष्मः।।**

९. चतुरवस्थश्च ऋतुरुपनिबन्धनीयः । तद्यथा-सन्धिः, शैशवं, प्रौढिः, अनुवृत्तिश्च । ऋतुद्वयमध्यं सन्धिः । शिशिरवसन्तसन्धिर्यथा-

**च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा**
**मनसि च गिरं गृह्णन्तीमे गिरन्ति न कोकिलाः ।**
**अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो**
**न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ।।७३।।**

वसन्तशैशवम् -

**गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा**
**वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।**
**किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो**
**देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ।।७४।।**

वसन्तप्रौढिः -

**साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः**
**कान्तिं कर्षति काञ्चनारकुसुमं मञ्जिष्ठधौतात् पटात् ।**
**हूणीनां कुरुते मधूकमुकुलं लावण्यलण्टाकतां**
**लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरम् ।।७५।।**

**अतिक्रान्तर्त्तुलिङ्गं यत् कुसुमाद्यनुवर्त्तते ।**
**लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ।।७६।।**

वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्तिः । यथा-

**खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं**
**चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।**
**गन्धं मुञ्चति सिक्तलाजसदृशं वर्षेण दग्धा स्थली**
**दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ।।७७।।**

एवमन्येऽपि ।

किञ्च-

**ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति लोके ।**
**जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ।।७८।।**

यथा-

**धूलीकदम्बपरिधूसरदिङ्मुखस्य**
**रक्तच्छटासुरशरासनमण्डनस्य ।**
**दीप्तायुधाशनिमुचो ननु नीलकण्ठ !**
**नोत्कण्ठसे समरवारिधरागमस्य ।।७९।।**

**जलसमयजायमानां जातिं यां कार्द्दमीति निगदन्ति ।**
**सा शरदि महोत्सविनी गन्धान्वितषट्पदा भवति ।।८०।।**

**स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो**
**जात्या जालं लतानां जरठपरिमलप्लावितानां जजृम्भे ।**
**नानाहंसोपधानं सपदि जलनिधेश्चोत्ससर्पापरस्य**
**ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ।।८१।।**

स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति ।

यथा-

**असूच्यत शरत्कालः केतकीधूलिधूसरैः ।**
**पद्मातामैर्नवायातश्चरणैरिव वासरैः ।।८२।।**

**शरद्भवानामनुवृत्तिरत्र**
**बाणासनानां सकुरुण्टकानाम् ।**
**हेमन्तवक्त्रे यदि दृश्यतेऽपि**
**न दृश्यते बन्धविधिः कवीनाम् ।।८३।।**

१०. हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तञ्च । 'द्वादशमासः संवत्सर, पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन ।

**मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः ।**
**रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्त्या च ।।८४।।**

**गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरा-**
**नुन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।**

सद्योभङ्गानुसारस्त्रुतसुरभिशिराः शीकरः साहकारः
सर्पन्नम्भः शरावे रचयति च रसो रेचकीचन्द्रकाणि ।।८५।।

कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किङ्किराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुञ्चिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन्
सोत्कण्ठं षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ।।८६।।

यथा वा-

धुनानः काबेरीपरिसरभुवश्चन्दनतरून्
मरुन्मन्दः कुन्दप्रकरमकरन्दानवकिरन् ।
प्रियक्रीडाकर्षच्च्युतकुसुममामूलसरलं
ललाटे लाटीनां लुठितमलकं ताण्डवयति ।।८७।।

११. एवमन्याप्यनुवृत्तिः ।

विचकिलकेसरपाटलिचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्त्तुभवं मरुबकमपि केचिदिच्छन्ति ।।८८।।

यथा-

कर्णे स्मेरं शिरीषं शिरसि विचकिलस्त्रग्लताः पाटलिन्यः
कण्ठे मार्णालहारो वलयितमसिताम्भोजनालं कलाच्योः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमाञ्जिष्ठपृष्ठे
गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ।।८९।।

यथा च-

अभिनवकुशसूचिस्पर्द्धि कर्णे शिरीषं
मरुबकपरिवारं पाटलादाम कण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ।।९०।।

एवमुदाहरणान्तराणि ।

ऋतुभववृत्त्यनुवृत्ती दिङ्मात्रेणाऽत्र सूचिते सन्तः ।
शेषं स्वधिया पश्यत नामग्राहं कियद् ब्रूमः ।।९१।।

देशेषु पदार्थानां व्यत्यासो दृश्यते स्वरूपस्य ।
तन्न तथा बध्नीयात् कविबद्धमिह प्रमाणं नः ।।९२।।

शोभान्धो गन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत् स्यात् सप्तममनुपयोगि ।।९३।।

यथा-

यत् प्राचि मासे कुसुमं निबद्धं
तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं
तदग्रिमे पाकपरिष्कृतं च ।।९४।।

द्रुमोद्भवानां विधिरेष दृष्टो
वल्लीफलानां न महाननेहा ।
तेषां द्विमासावधिरेव कार्यः
पुष्पे फले पाकविधौ च कालः ।।९५।।

अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।
सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ।।९६।।

लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ।।९७।।

पनसादि बहुव्याजं नीलकपित्थादि भवति निर्व्याजम् ।
सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः ।।९८।।

एकद्वित्र्यादिभेदेन सामस्त्येनाथवा ऋतून् ।
प्रबन्धेषु निबध्नीयात् क्रमेण व्युत्क्रमेण वा ।।९९।।

न च व्युत्क्रमदोषाऽस्ति कवेरर्थपथस्पृशः ।
तथा कथा कापि भवेद् व्युत्क्रमो भूषणं यथा ।।१००।।

अनुसन्धानशून्यस्य भूषणं दूषणायते ।
सावधानस्य च कवेर्दूषणं भूषणायते ।।१०१।।

इति कालविभागस्य दर्शिता वृत्तिरीदृशी ।
कवेरिह महान्मोह इह सिद्धो महाकविः ।।१०२।।

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
कालविभागो नाम **अष्टादशो**ऽध्यायः ।।१८।।

०००

## परिशिष्टम् - १

### काव्यमीमांसा

# श्लोकानुक्रमसूची


| | अध्याय पद्य |
|---|---|
| अगस्त्यचुलुको | १७.१४ |
| अङ्काधिरोपित | १६.०२ |
| अङ्गणे शशिमरी | १३.२५ |
| अट्टहासच्छले | १५.०२ |
| अतिक्रान्तर्त्तु | १८.७६ |
| अतितूर्णमति | ०७.३६ |
| अत्रावदातद्युति | १८.२२ |
| अत्रोपचार: | १८.३४ |
| अत्रोपवर्षवर्षा | १०.२३ |
| अथ पथि गम | १५.१९ |
| अथाऽऽगादेकदा | ०६.०६ |
| अनुसन्धानशू | ०७.२६ |
| अनेन सार्द्धं | ०४.०४ |
| अन्तर्व्याजं बहि | १८.९६ |
| अपङ्क्लिलतटावट: | १८.२९ |
| अपां लङ्घयितुं | ०९.१४ |
| अप्रत्यभिज्ञेय | १२.१७ |
| अभिनवकुश | १८.९० |
| अभिनववधूरोष | १८.४७ |
| अभिमुखे मयि | ०६.१७ |
| अभियोगे समाने | ०४.२१ |
| अभिलाषमु | ०९.३७ |
| अयं स भुवनत्रय | १६.०८ |
| अयं काकुकृतो | ०७.२८ |
| अयं प्रसूनोद्धुर | १८.५३ |
| अयमत्रैव | ०५.२४ |
| अरण्ये निर्जने | ११.२२ |
| अर्थ: स एव | १२.०२ |
| अर्थिजनार्थ | ०९.३४ |
| अलसवलित | ०९.३६ |
| अल्पाक्षर | ०२.०६ |
| अविरलमिव | १३.४७ |
| अविस्पष्टपदप्रायं | ०७.०५ |
| अवीनादौ कृत्वा | १२.०८ |
| अव्याद् गजेन्द्र | १३.१२ |
| अव्युत्पत्तिकृतो | ०५.०२ |
| असकलहसित | ११.२९ |
| असूच्यत शर | १८.८२ |
| अस्ताद्रिवेश्मनि | १३.०१ |
| अस्ति चित्रशिखो | ०८.३५ |
| अस्ति दैत्यो | १६.१६ |
| अस्त्युत्तरस्यां | १७.३३ |
| अहर्निशाविभा | १०.१४ |
| आकम्पितक्षि | १७.११ |
| आकाशयान | ०९.०५ |
| आगोपालकमा | ०७.४१ |
| आच्छिद्य प्रियत: | १२.१२ |
| आत्मारामा | ०५.१८ |
| आननेन्दुशश | १३.१० |
| आप: पवित्रं | ०६.२४ |
| आपातमारुत | १६.०५ |
| आमूलतो वलि | ०३.०८ |
| आ मूलयष्टे: | १७.१९ |
| आर्द्रार्द्रचन्दन | ०३.०५ |
| आर्द्रावले व्रज | ०९.१० |
| आलिख्य पत्र | १४.२२ |

आवापोद्धरणे ०५.१९
आश्लेषिणः पृथु १८.४१
आसंसारमुदारैः १२.०१
आसीदस्ति १४.०३
आस्तीकोऽस्ति ०९.१२
आस्थानकुट्टि १५.०५
इक्षुदण्डस्य ०८.२९
इति कालविभा १८.१०२
इति विकसति ०९.०४
इतिहासपुराणा ०८.१२
इत्युक्तवानुक्ति ११.१२,११.१३
इत्युद्गते शशिनि १३.०६
इत्थं कविर्निब ०७.३०
इत्थङ्कारं घनै ०९.४१
इत्थं ते विधृत ११.१९
इत्थं देशविभागो १७.४८
इत्थं सभापति १०.२४
इत्यनन्तो ०२.०८
इत्यनन्यमनो १०.२०
इत्यर्थहरणोपा १३.५९
इत्येष काव्य ०३.०९
इदं कविभ्यः ०८.४७
इदं भासां भर्त्तु १७.३९
इदं महाहास १०.०७
इदं हि वैदग्ध्य १०.११
इयं नः काव्य ०१.०२
इह कालिदास १०.२२
उच्चैस्तरां जह ०५.०९
उच्यतां स वच ०७.२५
उत्क्लेशं केशब १३.१९
उत्खातनिर्मल १५.०४
उत्पादकः कविः ११.३४
उदयति नवनीत १३.३४
उदयति पश्य १३.३३
उदरमिदम ०५.१४
उदीच्यचण्डानि १८.४५
उद्दण्डोदरपुण्ड १५.०८
उद्यानानां मूक १८.३७
उन्माद्यत्यम्बु ०८.४६
उपानयन्ती १८.२०
उपोप मे परामृ ०६.३५
उभौ यदि व्यो ०८.४४
उमैकपादाम्बु १३.२४
उषःसु ववुराकृ १८.०४
ऊरुद्वयं कदल ११.३२
ऋतुभववृत्त्य १८.९१
एकं ज्योतिर्दृशौ १७.२८
एकद्वित्र्यादि १८.९९
एकस्य तिष्ठति ०४.१०
एकोऽर्थः संस्कृ ०९.४०
एणाः स्थलीषु १८.६७
एतत् किं शिरसि ०५.०३
एतत् सुन्दरि १५.१५
एतद् यन्मण्डलं ०८.०३
एतां विलोकय ०६.१६,०९.२१
एतास्ता मलयो ०९.२२,१४.२१
एवं धारय देवि ०८.२६
कण्ठदोलायि ०६.०५
कथमसौ न भज १३.४३
कथमसौ मदनो १३.४४
कपाले मार्जारः १३.२१
कपोले जानक्याः १७.४५
करभाः शरभाः १८.६८
करोति काव्यं ०७.३१
कर्कन्धूनां नाग १८.३८
कर्कोटः कोटि ०९.०९

कर्णे स्मेरं शि १८.८९
कर्पूरचूर्णं सह १८.६४
कलिकलुषकृ ०८.२४
कवित्वं न स्थितं ०४.२३
कवीनां समयः १४.२६
कवेः संव्रियते ०५.०४
कश्चिद् वाचं ०४.१२
कस्त्वं भोः कवि ०४.१३
काञ्च्याः पुरो १७.३५
कान्ते तल्पमुपा १२.३१
कामं भवन्तु १४.१०
कामं विवृणुते ०७.२९
कारयित्रीभाव ०४.२५
कार्यावसरस १०.०९
काव्यकाव्याङ्ग ०४.०९
काव्यमय्यो ०९.२९
काव्येन किं कवे ०४.१६
काश्मीरीगात्र १७.४२
काष्ठा निमेषा १८.०१
किं करोति किय ११.०७
किञ्चैते हरणो १३.६०
किमिह किमपि ११.२४,११.२७
किमीहः किंकायः ०८.१७
कियताऽपि यत्र १२.०५
कियन्मात्रं जलं ०६.१८
कुकविर्विप्रल ०९.२५
कुन्दे मन्दस्त १८.८६
कुमुदवनमपश्रि ११.२६
कुरबक! कुचाघा १३.२८
कुर्वत्या कुङ्कुमा ०९.३३
कुर्वद्भिः सुरद ०८.४३
कुवलयशिति १३.०३
कृतः कण्ठे ०५.०५
केदार एव कल १८.२५
कैलासगौरं वृष १५.१७
कोपान् मानिनि ११.०४
क्रोधं प्रभो सं ०९.३८
क्षितिं खनन्तो १८.२१
खं वस्ते कल १८.७७
खर्जूरजम्बूपन १८.६०
ख्याता नराधि ०६.३१
गगनगमनलीला १४.०२
गतः स कालो ०७.२०
गद्ये पद्येऽथवा ०७.४७
गम्भीरत्वमनैश्वर्यं ०७.३७
गर्भग्रन्थिषु वीरु १८.७४
गर्भान् बलाकासु १८.१०
गीतसूक्तिरति १०.०५
गुणादानपरः ०४.२०
गुणानुरागमि ६.२७,८.४५,१५.०६
गुणालङ्कार ०५.२१
गूवाकानां नालि १८.५८
गेहाजिरेषु नव १८.२६
गेहे वाहीकयूनां १८.८५
गोत्राग्रहारं नयतो १४.०९
गौडाद्याः संस्कृ १०.०२
ग्रीष्मे चीरीनाद १८.७१
ग्रैष्मिकसमय १८.७८
घोरघोरतराती ०८.२२
चकार काचित् १३.०७
चकोरहर्षी यति १८.१३
चक्रं रथो मणि १७.१७
चतसृष्वपि दिक्षु १७.२७
चतुःसमुद्रवेलो १७.१३
चत्वार एते १२.२२
चत्वारि शृङ्गा ०३.०२

| | |
|---|---|
| चन्द्राद् बुधः | ०८.०१ |
| चन्द्रप्रभाप्रसर | १३.२६ |
| चरन्ति चतुर | ०६.१३ |
| चलच्चटुलचातकः | १८.१५ |
| चापं पुष्पमयं | १६.०३ |
| चिन्तासमं यस्य | १२.१८ |
| चैत्रे चित्रौ रक्त | १८.५७ |
| चैत्रे मदर्द्धिः | १८.४९ |
| च्युतसुमनसः | १८.७३ |
| जङ्घाकाण्डोरु | ०५.०६ |
| जडचन्दनचार | १८.७० |
| जनापवाद | १०.०४ |
| जम्बूद्वीपः सर्व | १७.०८ |
| जयति सितवि | ११.२५ |
| जयत्यमलकौ | ०६.१० |
| जयत्येकपदा | ०६.०७ |
| जयन्ति धवल | १२.०६ |
| जयन्ति नील | १२.०४ |
| जयन्ति बाणासुर | १३.४९,१६.१४ |
| जलसमयजाय | १८.८० |
| जानीयाल्लोक | १०.०३ |
| ज्योत्स्नां लिम्पति | ०८.३६ |
| ज्योत्स्नाजल | १३.२७ |
| ज्योत्स्नापूर | ०९.०६ |
| ज्योत्स्नार्चि | १३.२२ |
| त आकाशमसि | ०९.१५ |
| तं शम्बरासुर | १६.१५ |
| ततः पुरस्तात् | ०७.५१ |
| ततस्तमः श्या | १३.०९ |
| ततोऽरुणपरि | १२.३३ |
| तत् तावदेव | ११.२०,११.२१ |
| तत्र द्रुमा विद्रु | १७.२१ |
| तत्रागारं धनपति | १७.३६ |
| तथागतायां | ०४.०६ |
| तदेव वारि सि | ०९.१६ |
| तनुलग्ना इव | १४.११ |
| तन्वानोऽनन्य | १२.१४ |
| तमेनमवधीकृत्य | १७.१६ |
| तव नवनवनीत | १७.४४ |
| तस्य रत्नाकर | ०८.३५ |
| तस्याः प्रतिद्वन्द्वि | १३.१५ |
| ताटङ्कवल्गन | ०३.०६ |
| तापापहारच | १४.१६ |
| तामुत्तीर्य व्रज | १५.२१ |
| ताम्बूलवल्ली | १३.५५ |
| तासां माधवपत्नी | १७.४६ |
| तिष्ठन्त्या जन | १५.१८ |
| तीक्ष्णं रविस्त | १८.२७ |
| ते पान्तु वः | १२.०३ |
| त्यागाधिकाः | ११.१६ |
| त्यागो हि सर्व | ११.१७ |
| त्वं पासि हंसि | ०६.०९ |
| त्वद्विप्रयोगे | १४.२३ |
| त्वमेव देव पाता | १७.०३ |
| दक्षिणो दक्षिणा | १७.३१ |
| दत्तं पिण्डं | १२.३० |
| दत्त्वा रुद्धगतिः | ०९.३१ |
| ददृशाते जनैस्त | १४.१४ |
| दलत्कुटजकुड्मलः | १८.१६ |
| दलयता विशिखै | ११.०६ |
| दशदिक्तटपर्यन्त | १७.२९ |
| दानवाधिपते | १६.१७ |
| दारिद्र्यं व्यसना | १०.१३ |
| दिश्याद् धूर्जटि | १३.२० |
| दीपयन्नथ नभः | १३.०८ |
| दीर्घीकुर्वन् पटु | १४.०१ |

दु:खेन्धनैक ०७.१५
दूराकृष्टशिली ११.०१
दूरादुत्सुकमागते ०९.३०
दृष्टं किञ्चिददृष्ट ०६.२१
दृष्ट्वैकासन ०९.३२
दृष्ट्वान्येभं छेद १२.२३
देवासुरास्तमथ ०६.०८
देवी पुत्रमसूत ०५.११,१२.२०
देशेषु पदार्था १८.९२
दैवायत्ते हि १४.०८
दोर्दण्डताण्डव ०६.१६
दोर्मन्दीरितमन्द १६.१२
द्योतितान्त:सभै: १५.०७
द्रागगर्जयन्ती १८.१७
द्रुमोद्भवानां १८.९५
द्वन्द्वोऽस्मि ०६.०१
द्वा सुपर्णा ०२.०१
द्वित्रिमुचुकुन्द १८.३०
द्वित्रैर्व्योम्नि पुराण १७.३०
द्वीपान्तराणां १७.२६
द्वीपान्यष्टादशात्र १७.१०
द्वौ वज्रवर्णौ ०८.३९
धत्ते यत्किलकिञ्चि ०९.२३
धनुर्माला मौर्वी १६.०९
धन्यास्तु या: १२.३२
धुनान: काबेरी १८.८७
धुन्वंल्लङ्कावनाली १८.०७
धूलीकदम्बपरि १८.७९
न कौशेयं चित्रं ०५.०५
न च व्युत्क्रम १८.१००
नदीं तूर्णं कर्णो १५.१३
नद्यो वहन्ति १८.२८
न निसर्गकवि: ०४.२२
न प्राप्तं विषम ०५.१२
नम: शिवाय ०७.१३
नम: संसारनिर्वा ११.१४
नमन्नारायण १३.२३
नमस्तस्मै ०६.०३
नमस्त्रिभुवनाभोग १७.०४
नमोऽस्तु तस्यै ०८.०४
नयनोदरयो: १३.५३
नवजलधर: ०७.२१
न व्यस्तपदयोरैक्यं ०७.४०
न स सङ्कुचित: ०८.०७
न स्वरूपनिबन्धन ०९.१७
नागावासश्चित्र १४.०४
नातिस्पष्टो न ०७.४५
नाद्यन्तवन्त: ०८.२३
नाभीगुहाबिल १२.३८
नालिङ्गित: कुरबक १८.५६
नाश्चर्यं त्वयि ०८.२७
नाश्चर्यं यदनार्या ११.०३
नासत्यं नाम ०६.२२
नासतो विद्यते ०८.१५
नास्त्यचौर: कवि ११.३३
निक्षेपो विक्रयो १०.१२
निगदितनयविप १७.४७
नित्यं त्वयि ०६.३४
निरवधि च निरा १७.०६
निर्विवेकमनसो १२.२४
निश्चेतनानामपि १३.५६
नीचैर्नार्थकथासर्गे ०८.३७
नीलाश्मरश्मि १४.०५
नेच्छइ पासासंकी १२.२९
नेपाल्यो वल्लभै: ०८.३२
नैगमैर्विविधै: ०७.०४

न्यस्ताक्षरा १४.१७
पच्यन्त इव १८.६६
पञ्चस्थानसमुद्ध ०७.५४
पठन्ति लटभं ०७.४८
पठन्ति संस्कृतं ०७.४३
पत्युः शिरश्चन्द्र ०९.३९
पदवाक्यविदां ०७.२७
पदवाक्यविवे ०६.३७
पदान्तरं वेत्ति ०४.२४
पनसादि बहु १८.९९
परवाक्यार्थ १२.१६
परिक्रिया पुरा ०२.०३
परिग्रहभरा ०६.१४
पश्य पश्चिमदि १७.३२
पाकक्रियापरि १२.२६
पाञ्चालनेपथ्य ०३.०७
पाण्डोर्नन्दन ०९.०३
पाण्ड्योऽयमंसा ०८.४२
पादन्यासक्व १५.२०
पादस्ते नरवर ११.१८
पानेऽम्भसोः १८.४२
पितुर्गुरोर्नरि १०.१०
पिनद्धमाहार १८.५२
पिबतु मधुसुगन्धी ११.३०
पिबन्त्यास्वाद्य ०८.३०
पिहिते कारागारे १४.१२
पुंसः कालाति ११.०९
पुंस्कोकिलः १८.५१
पुन्नागरोध्रप्रस १८.३१
पुरा पाण्डुप्रायं १२.२५
पुष्पक्रिया मरुबके १८.४३
पुष्पं प्रवालोपहितं १५.११
पुष्पिण्यौ चरतो ०६.२३
पुष्पैः सम्प्रति १७.४१
पृथक्त्वेन न १२.४०
पौरस्त्यस्तोय १८.०३
प्रणतसुरकिरीट ०७.१०
प्रतिगृहमुपला १२.०९
प्रतिभातारतम्येन ०४.११
प्रतीच्छत्या ०५.१५
प्रत्यक्षकवि १०.०६
प्रथयति पुरः ०४.०१
प्रवर्त्तते कोकिल १७.२४
प्रशान्तजलभृ ०९.१८
प्रसर्पन् प्रग्रीवै ०६.३३
प्रसन्नमधुरोदात्त ०७.१६
प्रसन्ने मन्द्रयेद् ०७.३४
प्रसरति किमपि ०५.०१
प्रसरद्बिन्दु ११.१५
प्रसरन्ति कीर्त्त १५.०३
प्राग्दिशः प्रति १६.०२
प्राणानानिलेन ०४.०३
प्रावृष्यम्भोभृता १८.०२
प्रियङ्गुश्याम १५.०९
प्रोषितैकेन्दुहंसे १३.३५
फुल्लातिमुक्त १३.३१
बहुविधमिह ०८.१९
बह्वपि स्वेच्छया १०.१७
बह्वर्थेष्वभि ०८.०५
बुद्धिमत्त्वं च ०४.०८
ब्रह्मन्! विज्ञापया ०७.४४
भञ्जन्भूर्जद्रुमाली १८.०५
भवति प्रथयन्न ०२.०७
भवतु विदितं ०८.१८
भास्वत्कपोलतल १३.५४
भौमेन मूर्च्छितर १५.०५

| | | | |
|---|---|---|---|
| भ्रमति भ्रमर | ०७.११ | मुखमदिरया | १३.२९ |
| भ्रश्यद्भ्रूभुग्न | ०६.२० | मूर्त्तिर्नीलदुकू | १३.५८ |
| भ्रान्तजिह्वापता | ०५.१३ | मूलं बालक | ०५.१७ |
| भ्रामकश्चुम्बकः किञ्च | १२.१३ | मूलैक्यं यत्र | १२.१० |
| मज्जनपुष्पावचय | ०९.१९ | मेघश्यामेन | १५.१२ |
| मण्डलीकृत्य | १४.२५ | मेघानां क्षणहास | ०८.३८ |
| मथ्नामि कौरव | ०७.२३ | यः सर्वेषां हृदय | ०८.४१ |
| मदं नवैश्वर्यल | ०८.०८ | य एते यज्वानः | ०८.१६ |
| मध्ये जम्बूद्वीप | १७.१५ | यच्चन्द्रकोटि | ०७.०८ |
| मनाङ् मूले नीलं | १३.०४ | यत् कायमानेषु | १८.६२ |
| मनोऽधिकं चात्र | १८.५० | यत् किञ्चिन्मन्त्र | ०७.०३ |
| मरकतसदृशं | १५.१४ | यत्तन्त्राक्रान्तिमज्ज | १२.२८ |
| मरुबकदमन | १८.८४ | यत्पदानि | ०५.२० |
| मसारपारेण | १३.४६ | यथा जन्मान्तरा | ०७.३२ |
| महानवम्यां | १८.२३ | यथा यथा पुष्यति | १८.३२ |
| महासुरसमाजे | १६.१८ | यथा व्याघ्री | ०७.३८ |
| मा कोशकारल | १२.१९ | यदेतद् वाङ्मयं | ०३.०१ |
| मा गाः पाताल | ०९.०७ | यदेतन्मण्डलं | ०८.०२ |
| मा गाः पान्थ | ११.०२ | यद् वर्ग्याभिर्जगाहे | १२.३९ |
| मातङ्गानामभावे | १७.१२ | यन्त्रद्रावितकेत | १४.१३ |
| माद्यच्चकोरे | १३.४५ | यस्तु प्रयुङ्क्ते | ०६.२५ |
| माद्यन्मतङ्गः | १८.४६ | यस्याः प्रसन्न | ०६.३६ |
| मा निषाद | ०३.०४ | यत् प्राचि मासे | १८.९४ |
| मा भैः शशाङ्क | १६.०१ | यथा तथा वास्तु | ०९.२६ |
| मार्गानुगेन | ०७.५२ | यथा यथाभियोग | १०.१५ |
| मालतीविमुख | १४.०६ | यदि मे वल्लभा | ०७.१९ |
| मालायमाना | १६.०७ | यद्यपि चन्दन | १४.०७ |
| मासि मासि समा | १४.१५ | यद्युदुम्बरवर्णानां | ०६.२६ |
| मिथ्यामीलदरा | ०८.३३ | यश्चुम्बति परस्यार्थं | १२.१५ |
| मीनध्वजस्त्वमसि | १६.०४ | यस्तु सरिदद्रि | ०९.२० |
| मुक्तके कवयो | १०.१६ | यस्य केशेषु | ११.२३ |
| मुक्तानामिव | १३.४८ | यस्य तन्त्रभरा | १२.२७ |
| मुक्तालताश्च | १८.६५ | यस्याधोऽधस्त | १६.१० |

| | | | |
|---|---|---|---|
| यस्यारातिनित | १२.११ | लोलल्लाङ्गूल | ०५.०७ |
| यस्योत्तमां मौक्ति | १७.२० | वचः स्वादु | १०.०८ |
| यांस्तर्ककर्कशान | ०८.२१ | वधूं श्वश्रूस्थाने | ०९.०८ |
| या केलियात्रा | १८.१४ | वनानि नीलीदल | १८.१२ |
| या चन्द्रिका | १८.६३ | वन्द्या विश्वसृजो | १६.०६ |
| यादांसि हे चरत | १७.३४ | वयं बाल्ये डिम्भां | ०६.२८ |
| या दुग्धाऽपि | ०३.०३ | वरदाय नमो | ११.०८ |
| या व्यापारवती | ११.२८ | वराहवर्ध्राणि | १८.३३ |
| युष्मच्छासनल | ०७.२२ | वसन्ते शीत | १४.२४ |
| युधिष्ठिरक्रोध | १७.४३ | वस्तुस्वभावो | ०९.२८ |
| ये कीर्णक्वथितो | १३.१८ | वाग्भावको भवे | ०४.१९ |
| येन ध्वस्तमनो | १६.११ | वाग्लवं न स | ०१.०३ |
| येऽपि शब्दविदो | ०७.४२ | वात्याचक्रकचु | १८.०८ |
| येषां मध्येमन्दिरं | १८.३९ | वल्मीकजन्मा | ०६.३२ |
| येषां वल्लभया | ०९.२७ | विकाशकारी | १८.५९ |
| ये सीमन्तितगात्र | १३.१७ | विचकिलकेसर | १८.८८ |
| यो माधवीमुकुल | १८.५५ | वित्रस्तशत्रुः | ०६.०४ |
| रङ्गत्तरङ्गभ्रूभङ्गै | १४.१९ | विद्याधराप्सरो | ०७.०६ |
| रजनिपुरन्ध्रिरो | १३.३६ | विद्यास्थानानां | ०२.०४ |
| रविसङ्क्रान्तसौ | १३.१४ | विद्येव पुंसो | ०५.०८ |
| रसः कोऽप्यस्तु | ०७.४६ | विधर्माणो भावा | ०९.२४ |
| रात्रिर्विचित्रसुरतो | १८.४० | विन्ध्यश्च पारिया | १७.१८ |
| रीतिं विचिन्त्य | १०.१८ | विन्ध्यस्याद्रेः | १२.३७ |
| रोहीतकाम्रात | १८.५४ | विभक्तयः स्फुटा | ०७.३९ |
| रुणद्धि रोदसी | १७.०२ | विमुक्तबर्हा | १८.३५ |
| लकुचाद्यन्त | १८.९७ | वियति विसर्प | १३.३८ |
| लक्ष्म्याः क्षीरनिधेरु | १३.५२ | विरम मदन | ०८.३१ |
| लम्पाकीनां किरन्त | १८.०६ | विलासभूमिः | १७.२२ |
| ललल्लकारया | ०७.५३ | विशिखामुखेषु | १३.३७ |
| ललितं काकुसम | ०७.३५ | विशेषलक्षण | ०६.०२ |
| लावणो रसमयः | १७.०९ | विषयस्य यत्र | १२.०७ |
| लीढाभिधोप | १०.१९ | वेदार्थस्य | ०८.१३ |
| लेखया विमल | १५.१६ | वैदर्भी गौडीया | ०७.१८ |

व्यक्तक्रमम ०७.०२
व्योम्नि तार १८.२४
शब्दानां विवि ०४.१४
शब्दार्थशासनविद: १३.६१
शब्दार्थोक्तिषु ११.३५
शमव्यायामा ०८.२५
शरद्भवानामनु १८.८३
शरीरमात्रमात्मानं ०८.२०
शाखास्मेरं १७.४०
शारदाया: प्रसा ०७.५०
शेतां हरिर्भवतु १४.१८
शैलच्छलेन स्वं १३.३०
शोकाश्रुभिर्वासर १३.११
शोभान्धो गन्ध १८.९३
श्यामं शिखाभुवि १३.०५
श्यामेष्वङ्गेषु १७.३८
श्रिय: पति: श्री ०९.०२
श्रीमन्ति राज्ञां ०६.३०
श्रुतीनां साङ्गशाखा ०८.११
संस्तम्भिनी १७.०५
सकाकुकलना ०७.५५
सखञ्जरीटा १८.१९
सख्या वा नायि ०७.२६
सङ्क्षिपता याम १४.२०
सति वक्तरि ०५.२२
सत्काव्ये विक्रिया: ०४.१८
स दक्षिणापाङ्ग ०८.४०
सन्ति पुस्तकवि ०४.१७
स पातु वो यस्य ९.११,११.१०
स पातु वो यस्य हता ११.११
समासरूपक ०७.१४
समासव्यास ०१.०१,०७.०७
सम्यगभ्यस्यत: ०५.२३
सरितामिव ०२.०५
सर्ग: प्रतिसंहार: ०२.०२
सर्वभूतात्मकं ०७.०१
स सञ्चरिष्णुर्भु ०८.१०
समं कुसुमचापेन १२.३४
स देव: सा दंष्ट्रा ०६.१५
सद्य:स्नातजपत्त १२.३६
सन्मार्गालोक १३.५०
सम्विधातुमभि १३.३२,१३.४१
सरलकरदण्ड १३.१३
सरस्वती सा १३.४२
सशमीधान्य १८.३६
ससंस्कृतमपभ्रंशं ०७.३३
स सल्लकीसाल १८.११
सहकाररसाचिता १८.६९
सह्याद्रेरुत्तरे भागे १७.३७
सांयात्रिकैरवि १५.१०
सा तत्र चामीक १७.२३
सा पत्यु: प्रथमा ०९.२९
सा भाति पुष्पाणि १८.१८
सामान्यवाचि ०८.१४
साम्यं सम्प्रति १८.७५
सारस्वतं किमपि ०४.०२
सारस्वत: ०४.०७
सितमणिकल १३.४०
सिद्धार्थयष्टिषु ५६७
सिद्धि: सुक्तिषु १८.४४
सुप्तस्यापि १२.०१अ
सुभ्रु त्वं कुपिते ११.३१
सुराष्ट्रद्रविणाद्या ०७.४९
सुसर्जितां श्रोत्र ०७.१७
सेयं पश्यति ०७.२४
सोऽयमित्थङ्कार ०९.१३

सोऽयं करैस्तपति १८.०९
सोऽयं कवीनां १६.१९
सोऽस्मिञ्जयति ०६.१२
सोऽयं भणिति १३.१६
स्त्रियः प्रकृति १८.४८
स्थेमा स्तोकोऽपि ०६.१९
स्फटिकमणिघट १३.३९
स्फुटितपिठरी ०८.२८
स्तिमितविक ०९.३५
स्तेमः स्तोकोऽपि १५.०१
स्तोकानुप्रास ०७.०९
स्थिते कुक्षेरन्तर्मु १२.२१
स्थूलावश्याय १८.८१
स्नानार्द्रैर्विधुत १२.३५
स्नानार्द्रैर्विधुत १३.५१
स्मृत्वा यन्त्रि ०९.०१
स्रोतांस्यनम्भांसि १८.६१
स्वामी मित्रं च ०४.१५
स्वास्थ्यं प्रति १०.०१
हंस प्रयच्छ ०८.०६
हतत्विषोऽन्धाः ०५.१०
हरहासहरावास १७.०७
हरोऽपि तावत् ०४.०५
हलमपारपयो ११.०५
हलमगु बलस्यै १७.०१
हर्म्यं रम्यं चन्द्रि १८.७२
हारो वक्षसि १३.५७
हिमवद्विन्ध्य १७.२५
हिरण्यकशिपु ०८.०९
हृष्यति चूतेषु ०६.११
हे नागराज १६.१३
ह्रस्वैः समासै ०७.१२

000

## परिशिष्टम् - २

# काव्यमीमांसायामुल्लिखिता आचार्याः


अपरे ३७,७२,८१

अवन्तिसुन्दरी ३०,४७,५७,६७
(राजशेखरस्य पत्नी)

आचार्याः ११,१३,१४,१९,२१,
२३,२४,२६,३०x३,३४,
४१,४६,६१x२,६६-६८,
७१,९०x२,१०८,११३

आनन्दः (आनन्दवर्धनः) २६

आपराजितिः ५६

आपिशलेयः १३

आर्षम् ३९

आर्षिपुत्रकः ३९

आर्षिकः ३९

ईश्वराः ३९

उक्तिगर्भः ११

उतथ्यः ११

उपमन्युः ११

उशनस् १७

ऋषयः ३९

ऋषीकाः ३९

एके ७२

औद्भटा ३३,५५

औपकायनः ११

औमेयी १८

औशनसाः १४

कन्दः ८५

कामदेवः ११

कालिदासः २४

काव्यपुरुषः (सारस्वतेयः) ११,१६,
१७,२०

काव्यविद्या ११

काव्यविद्यास्नातका ११

कुचुमारः ११

कुबेर ११

कुमारः (कार्त्तिकेयः) १७

कुमारदासः २२

कुविन्द (सूरसेनाधीशः) ६१

केचित् ७२

कौटिल्यः १४

गोनर्दीयः ३६

गौरी १७

चतुर्थः (दिव्यमानुषः) ५३

चित्राङ्गदः ११

चिन्तामणिः ७४

तृतीयः (दिव्यमानुषः) ५९

द्रौहिणिः ११,५३

द्वितीयः (दिव्यमानुषः) ५३

द्वैपायनः (व्यासः) १७

धिषणः ११,१७

नन्दिकेशरः १३

परमेष्ठी ११,१७

पाणिनिः ३२

पाराशरः ११

पाल्यकीर्त्तिः ५७

पुलस्त्यः ११

प्रचेताः ११

प्रजापतिः ११,५९

प्राचेतसः (वाल्मीकिः) १७

बार्हस्पत्याः १४
बृहतां पतिः १६
बृहस्पतिः ३२,३९
ब्रह्मर्षिः १७
भरतः ११
भवानी १८
भृगुप्रभृतयः ३९
भृगुसूतिः (परशुरामः) १७
भार्गवः (परशुरामः) ३९
मङ्गलः २२,२४,२६,३०x२
महर्षयः ३७
महामुनिः (वाल्मीकिः) १७
मानवाः १४
मेधाविरुद्रः २२
यमः ११
यायावरीयः(राजशेखरः) ११-१५,
१९,२२-२४,२६,४१,४६,
५३,५७,७२ (३८वारान्)
रुद्रटः ४१
वाक्पतिराजः ७२
वाग्देवी १७,४९
वामनीयाः २४x२,३०
वाल्मीकिः १७,३७
विद्वांसः १६,३२
विरिञ्चः १६
वृन्दारकः १७
वैकुण्ठः ११
शतक्रतुः ३२
शारदा (कश्मीरगा) ४५
शिशुनागः (मगधेषु राजा) ६१
शेषः ११
श्यामदेवः २१,२३,२७
श्रीकण्ठः ११
सरस्वती १६,२०,२५,३०,४०,
४१,४३,४४,५९,६४
सहस्राक्षः ११
सातवाहनः ६५
सारस्वतेयः(काव्यपुरुषः)१३,१६-१९
साहसाङ्कः (उज्जयिनीशः) ६५
सुरानन्दः ८५
सुवर्णनाभः ११
स्वयम्भूः ११,१७,२०,३९
स्वायम्भुवः ३९


०००

**परिशिष्टम् - ३**

# काव्यमीमांसाकोषः

## (परिभाषा : सुभाषितानि च)

**अङ्गदेशः** विहारेषु भागलपुर-मुङ्गेरयोर्मध्यवर्त्ती भूभागः । चम्पापुरी यत्र राजधानी। १८

**अतिशयं** पाराशरः ११

**अत्रिनेत्र-** समुद्रोत्पन्नयोश्चन्द्रयोरैक्यं कविसमये १००

**अध्यायः** काव्यमीमांसाग्रन्थानुच्छेदः ३

**अनियतकालाः** प्रवृत्तयो विप्लवन्ते, तस्माद् दिवसं निशां च चतुर्धा विभजेत्। कविः प्रातरुत्थाय कृतसन्ध्यावरिवस्यः सारस्वतं सूक्तमधीयीत । ततो विद्यावसथे यथासुखमासीनः काव्यस्य विद्या उपविद्याश्चानुशीलयेत् आप्रहरात् । न ह्येवंविधमन्यत् प्रतिभाहेतुर्यथा प्रत्यग्रसंस्कारः । ६२

**अनियतदिक्को** वायुर्ग्रीष्म इत्येके, नैर्ऋत इत्यपरे, उभयमणीति यायावरीयः । ११४

**अनुप्रासवत्** १९

**अनेकत्र** प्रवृत्तवृत्तीनामेकत्राचरणं **नियमः** । यथा समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि । ९२

**अन्तर्वेदी** विनशन-प्रयागयोर्गङ्गायमुनयोश्चान्तरम् अन्तर्वेदी । १०८
विनशनं क्षेत्रं यत्र सरस्वतीजलं प्रच्छन्नम् ।
अन्तर्वेदीमपेक्ष्य दिशो विभजेदित्याचार्याः ।
तत्रापि महोदयं मूलमवधीकृत्येति यायावरीयः । १०८

**अन्ययोनिर्द्विविधः**
१. प्रतिबिम्बकल्पः २. आलेख्यप्रख्यश्च । ७३

**अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात् । मध्वपि नानवदंशं स्वदते ।** ६५

**अपभ्रंशः**
अपभ्रंशभाषणप्रवणः परिचारकवर्गः, समागधभाषाभिनिवेशिन्यः परिचारिकाः। प्राकृतसंस्कृतभाषाविदः अन्तःपुरिका मित्राणि चास्य सर्वभाषाविन्दि भवेयुः । ६०

**अपौरुषेयं** वाङ्मयम् १३

**अभीष्टतिब्वृत्तयः** सर्वेऽपि सन्तः । ३२
**अभ्यासः** कवित्वसिद्धिहेतुरिति मङ्गलः । २२
**अभ्रगङ्गा** १६
**अमत्सरी** ज्ञाता च विरलः (मत्सरः अन्यशुभद्वेषः) । २४
**अम्लीभवन्ति** च जरत्त्रपुसीफलानि । ११७
**अयोनिः** एक एव (कविः) । ७२
**अरोचकिता** नैसर्गिकी ज्ञानयोनिर्वा ।
**अरोचकी** मत्सरी (विवेकिनः) २४
**अर्थः** सप्तधेति यायावरीयः-दिव्यो, दिव्यमानुषः, मानुषः, पातालीयः,
मर्त्यपातालीयः, दिव्यपातालीयः, दिव्यमर्त्त्यपातालीयश्चेति । ५३
**अर्थव्यवस्थितपादा** ऋचः । १३
**अर्थश्लेषम्** उतथ्यः ११
**अर्थस्त्रिविध** इति द्रौहिणिः दिव्यो दिव्यमानुषो, मानुषश्चेति । ५३
**अर्थहरणेष्वालेख्यादयो** भेदाः । ७९
**अर्थहरणोपायाः** । १२
**अर्थानुशासनम्** । १२
**अर्बुदजनपदः** १० आबूपर्वतं परितः प्रसृतं क्षेत्रम् इति ?
आबूनाम्ना प्रतीतः पर्वतः । १९
**अर्हद्भदन्तदर्शने** लोकायतं च पूर्वः पादः । १५
**अलङ्कारकविर्द्विधा** शब्दार्थभेदात् । २८
**अवन्तिसुन्दरी** । ५७
**अवन्ती**जनपदः । १९
**अवन्तीजनपदे** पाञ्चालदाक्षिणात्यप्रवृत्त्योः सम्भेदः । १९
**अविच्छेदशीलनमभ्यासः** । २२
**अविशेषविवक्षा** यदेकयति, विशेषविवक्षा त्वनेकयति । १०४
**अष्टादश** विद्यास्थानि वार्त्ता, कामसूत्रम्, शिल्पिशास्त्रम्, दण्डनीतिः
पूर्वैश्चतुर्दशभिः सहाष्टदर्श विद्यास्थानानि । १४
**अष्टादश** विद्यास्थानानि-वार्त्ता, कामसूत्रम्, शिल्पिशास्त्रम्,
दण्डनीतिः चतुर्दश-भिः सहाष्टादश विद्यास्थानानि । १४
**असतोऽपि गुणस्य** निबन्धनम्, यथा यशोहासप्रभृतेः शौक्ल्यम्,
अयशसः पापप्रभृतेश्च कार्ष्ण्यम्, क्रोधानुरागप्रभृते रक्तत्वम् । ९५
**असतः** सामान्यस्य निबन्धनम् । यथा नदीषु पद्मोत्पलादीनि,
जलाशयमात्रेऽपि हंसादयः, यत्र तत्र पर्वतेषु
सुवर्णरत्नादिकं च । ९०

**असतोऽपि** क्रियार्थस्य निबन्धनम् यथा चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणम्, चकोराणां चन्द्रिकापानम् । ९३
द्रव्यस्य निबन्धनम् । यथा मध्यस्य मुष्टिग्राह्यत्वम्, सूचीभेद्यत्वं तमसः, कुम्भापवाह्यत्वं च ज्योत्स्नायाः । ९२
**असत्यार्थाभि**धायित्वान्नोपदेष्टव्यं काव्यमित्येके, नेति यायावरीयः । ३५
**असदुपदेश**त्वान्नोपदेष्टव्यं काव्यम् इत्यपरे । ३७
**असभ्यार्थाभि**धायित्वान्नोपदेष्टव्यं काव्यमिति केचित् ३७
प्रक्रमापन्नो निबन्धनीय एवायमर्थ इति यायावरीयः ३७
**असमासः** १९
**असूर्यम्पश्यः** कविः, यो गुहागर्भ-भूमिगृहादि-प्रवेशान्नैष्ठिक वृत्तिः कवते असावसूर्यम्पश्यः । तस्य सर्वे कालाः । ६३
**अस्तु नाम** निःसीमार्थसार्थः, किन्तु, रसवत एव निबन्धो युक्तः, न नीरसस्येत्यापराजितिः ।
'आमि'-ति यायावरीयः, अस्ति चानुभूयमानो रसस्यानुगुणो विगुणश्चार्थः। काव्ये तु कविवचनानि रसयन्ति विरसयन्ति च, नार्थाः । अन्वयव्यतिरेकाभ्याञ्चेदमुपलभ्यते । ५६
**आकल्पः** (वेषः) १८
**आक्षिप्य** भाषणाद् भाष्यम् १५
**आख्यातगणः**, विशेषलक्षणानुसन्धानेनावर्धताख्यातगणः । ३३
**आख्यातपरतन्त्रा** वाक्यवृत्तिः, अतो यावदाख्यातमिह वाक्यानीत्याचार्याः ।
एकाकारतया कारकग्रामस्य, एकार्थतया च वचोवृत्तेरेकमेवेदं ३४
वाक्यमिति यायावरीयः । ३४
**आनुप्रासिकं** प्रचेताः ११
**आन्वीक्षिकी** त्रयी वार्त्तेति त्रयी विद्या । १४
**आन्वीक्षिकी**-त्रयी-वार्त्ता-दण्डनीतयश्चतस्रो विद्या इति कौटल्यः । १४
**आन्वीक्षिकी** द्विधा पूर्वोत्तरपक्षाभ्याम् । १५
**आपराजितिः** ५६
**आभिर्धर्मार्थौ** विद्यादिति विद्यानां विद्यात्वम् । १५
**आयुर्वेदः** उपवेदः १३
**आरभटी** १८
**आर्य्यावर्त्तः** पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्त्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यञ्च । तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् । १०७

**आर्हत** (जैन) ४९
**आवन्ती** प्रवृत्तिः १९
**आवन्त्याः** 'आवन्त्या; पारियात्राः सह दशपुरजैर्भूतभाषां भजन्ते । ६१
**आविद्धगतिः** १८
**आविद्धगतिमत्त्वादारभटी** १८
**आहार्यबुद्धिः** (शिष्यः) २१
**इतिहासवेद**-धनुर्वेदौ १३
**इतिहासो** द्विविधः परिक्रिया, पुराकल्पश्च । परिक्रिया एकनायिका,
बहुनायकः पुराकल्पः । १४
**उक्तानुक्तद्विरुक्तचिन्ता** वार्त्तिकम् १५
**उक्तिगर्भः** (ऋषिविशेषः)
**उचितसंयोगः** (पाण्ड्योऽयमं) ५२
**उज्जयिनी** (जनपदः) यत्र साहसाङ्को नाम राजा ६१
**उतथ्यः** अर्थश्लेषम् उतथ्यः । ११
**उत्तंसः** अन्ययोनि-आलेख्यप्रख्यविकल्पः ८०
**उत्पादकः** कविः कश्चित्, कश्चिच्च परिवर्त्तकः,
आच्छादकस्तथा चान्यस्तथा संवर्गकोऽपरः ७१
**उत्पाद्यसंयोग** ५२
**उदीच्या** (दिक्) ५०
**उपकारकत्वादलङ्कारः** सप्तममङ्गम् इति यायावरीयः, ऋते च
तत्स्वरूपपरिज्ञानाद् वेदार्थाऽनवगतिः । १३
**उपमध्याह्नं** स्नायात् अविरुद्धं भुञ्जीत च । भोजनान्ते काव्यगोष्ठीं प्रवर्त्तयेत्।
कदाचिच्च प्रश्नोत्तराणि भिन्दीत, काव्यसमस्याधारणा,
मातृकाऽभ्यासः चित्रा योगा इति आ यामत्रयम् । ६२
**उपमन्युः** गुणौपादानिकाधिकरणमुपमन्युः । ११
**उपविद्याः** कलाश्चतुष्षष्टिरुपविद्या । ६०
उपविद्याश्चतुष्षष्टिः । ताः कला इति विदग्धवादः ।
स आजीवः काव्यस्य । १५
**उभयालङ्कारिकं** कुबेरः ११
**उशनस्** कविः शुक्राचार्यः १७
**ऋक्** (वेदः) ऋचः सगीतय; सामानि १३
ऋग्यजुःसामवेदास्त्रयी, अथर्वणश्च तुरीयः १३
**ऋतुद्वयमध्यः** सन्धिः १२४
**एक एवायं** लावणः समुद्र इत्येके १०४

**एकपत्नीव्रतं** धत्ते कवेर्देवी सरस्वती । ६४
**एकपदहरणं** न दोषायेत्याचार्याः, ऋते द्व्यर्थकात् पदादिति यायावरीयः । ६६
**एकपरिकार्यः** अन्ययोन्यालेख्यप्रख्यविकल्पः । ८१
**एर्वारुकं** स्फुटननिर्गतगर्भगन्धम् ११७
**एला** १०६
**औक्तिकम्** उक्तिगर्भ (आचार्यः) ११
**औड्रमागधी** वेषानुकृतिः प्रवृत्तिः १८
**औपकायनः** (आचार्यः) औपम्य प्रवर्त्तक आचार्यः । ११
**औपदेशिकी** प्रतिभा तन्त्रमन्त्राद्युपदेशप्रभवा औपदेशिकी प्रतिभा । २३
**औपनिषदकं** कुचुमारः । ११
**औपम्यम्** औपकायनः ११
**औमेयी** साहित्यविद्या १८,१९x३
**कक्कोलकः** १०६
**कथा** कथास्तिस्रो भवन्ति १. वादो २. जल्पो ३. वितण्डा च । १५
**कथापुरुषव्यवहारः** २२
**कन्दः** तुल्यदेहितुल्यविकल्पः ८५
**कर्षकः** (कविः) ७४
**कला** त्रिंशच्च काष्ठाः कथिता कलेति ११३
**कलिङ्ग** (जनपदः) उत्कलान्ध्रयोर्मध्ये पश्चिमाब्धिस्पर्शि क्षेत्रम् । १९
**कविः** अन्यापदेशी २९

**अवस्था** दश च कवेरवस्था भवन्ति । तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्च औपदेशिकस्य । तद्यथा २९
१. काव्यविद्यास्नातकः २. हृदयकविः ३. अन्यापदेशी
४. सेविता ५. घटमानः ६. महाकविः ७. कविराजः
१. आवेशिकः २. अविच्छेदी ३. संक्रामयिता चेति २९-३०

अन्यापदेशी २९
अविच्छेदी २९
आवेशिकः ३०
कविराजः ३०
काव्यविद्यास्नातकः २९
घटमानः ३०
महाकविः ३०
संक्रामयिता ३०
सेविता ३०
हृदयकविः २९

कारयित्री प्रतिभा कवेरुपकुर्वाणा २३
**कवि-सरस्वती** ५९
**कविस्त्रिधा** शास्त्रकविः २७
काव्यकविः २७
काव्यशास्त्रोभयकविः २७
**कविकर्मणि कवेः समाधिः परं व्याप्रियते** इति श्यामदेवः २१
**कविः** प्रथममात्मानमेव कल्पयेत् । ६१
**कविग्रामणीः** ५१
**कविचर्या** १२,६०,६५
**कविपरिकरः** कवेः सततसन्निहिताः स्युः
सम्पुटिका, सफलकखटिका, समुद्गकः, सलेखनीकं मषीभाजनम्, ताडीपत्राणि भूर्जत्वचो वा, सलोहकण्टकानि तालदलानि सुसंमृष्टा भित्तयः । एतद्धि काव्यविद्यायाः परिकर इत्याचार्याः ।
प्रतिभैव परिकर इति यायावरीयः । ६१
**कविभवनम्** कवेर्भवनं सुसम्मृष्टम्, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूल-कल्पितापाश्रयवृक्षवाटिकम्, सक्रीडापर्वतकम्, सदीर्घिका-पुष्करिणीकम्, ससरित्समुद्रावर्त्तकम्, सकुल्याप्रवाहम्, सबर्हिण-हरिणहारीतम्, ससारस-चक्रवाक-हंसम्, सचकोरक्रौञ्चकुर-रशुकसारिकम्, घर्मक्लान्तिचौरम्, सभूमिधारागृह-यन्त्र-लता मण्डपकम्, सदोलाप्रेङ्खं च स्यात् । ६०
**कविभावकयोर्न भेदः**, यत् कविर्भावयति, भावकश्च कविरि'-त्याचार्याः, नेति कालिदासः । पृथगेव कवित्वाद् भावकत्वम्, भावकत्वाच्च कवित्वम्, स्वरूपभेदाद् विषयभेदाच्च । तदाहुः 'कश्चिद् वाचं रचयितुमलं भोक्तुमेवापरस्तामि'त्यादि । २४
**कविमानिन्** कविमानिनं तु छन्दोऽनुवर्त्तनेन रञ्जयेत्, कविम्मन्यस्य पुरतः सूक्तमरण्यरुदितं स्याद् विप्लवेत च । ६२
**कविरहस्यम्** ११
**कविवचनायत्ता लोकयात्रा** । सा च निःश्रेयसमूलम् इति महर्षयः । ३६
**कविशब्दः** 'कवृ'-वर्णे इत्यस्य धातोः काव्यकर्मणो रूपम् । १७
(नेति सनातनः, 'कबृ' वर्णे इति वर्णशब्दोऽत्र शुक्लरक्त-त्वादिवर्णपरः अथवा 'कवृ' पृथगेव कोऽपि धातुः । 'कु'-रिति कुङिति वा सुलभ एवान्यो धातुः ।)
**कविश्चतुर्विधः** १. असूर्यम्पश्यः २. निषण्णः ३. दत्तावसरः

४. प्रायोजनिकश्च । ६३

**कविविशेष:** ११

**कविव्यवहार:** द्विविधो व्यवहार; कवीनाम्, प्राक्सिद्ध:,
विशिष्टस्थानावधिसाध्यश्च । १०९

**कविसभा** ६४

**कविसभानुलग्नं राज्ञ: केलिगृहम्** । ६५

**कविसमय:** १२,९०

कविसमयश्च त्रिधा स्वर्ग्य:, भौम:, पातालीयश्च । स्वर्गपाता-
लीययो-र्भौम: प्रधान: । स हि महाविषय: । स च चतुर्धा
जातिद्रव्यगुण-क्रियारूपार्थतया । तेऽपि प्रत्येकं त्रिधा असतो
निबन्धनात्, सतोऽप्यनिबन्धनात्, नियमतश्च । तत्र कश्चिदाद्यत्वेन
व्यवस्थित: कविसमयेनाऽर्थ: कश्चित् परस्परोपक्रमार्थं स्वार्थाय
धूर्त्तै: प्रवर्त्तित:।

पूर्वे हि विद्वांस: सहस्रशाखं साङ्गं च वेदमवगाह्य, शास्त्राणि
चावबुध्य, देशान्तराणि द्वीपान्तराणि च परिभ्रम्य यानर्थानुपलभ्य
प्रणीतवन्तस्तेषां देशकालान्तरवशेनाऽन्यथात्वेऽपि तथात्वेनोप-
निबन्धो य: स कविसमय:। कविसमयशब्दश्चायं मूलमपश्यद्भि:
प्रयोगमात्र-दर्शिभि: प्रयुक्तो रूढश्च।।

अशास्त्रीयमलौकिकं च परम्परायातं यमर्थमुपनिबध्नन्ति कवय:
स कविसमय: ।

नन्वेष दोष इत्याचार्या:,
कविमार्गानुग्राही कथमेव दोष इति यायावरीय: ९०

**कविस्थानम्** काव्याभिनिवेशखिन्नमनसस्तद्विनिर्वेदच्छेदाय
आज्ञामूकपरिजनं विजनं वा तस्य स्थानम् ।। ६०

**काकु:** अभिप्रायवान् पाठप्रकार: काकु:, सा कथमलङ्कारी स्यादिति
यायावरीय:। काकुप्रकारा:, काकुत्रययोग:, काकुचतुष्टययोग: ४१-४२

अनुनयकाकु (युष्मच्छासन) ४२

अभ्यनुज्ञाकाकु:

अभ्युपगमकाकु: मथ्नामि

उपहासकाकु: ४२

काकुमाहात्म्यम्

काकुवक्रोक्ति: रुद्रट: ४१

**कादम्ब:** (कृष्णहंस:) ११६

**कामकेतने** मकरमत्स्ययोरैक्यम् ९९

**कामदेवः** वैनोदिकं नाम कामदेवः (तन्नामाचार्यः) ११
**कामसूत्रीयः** 'नाश्चर्यम्' ५०
**कामस्य** मूर्त्तत्वम् १००
**कायशौचम्** सनखच्छेदौ पादौ, सताम्बूलं मुखम्, सविलेपनमात्रं वपुः, महार्हमनुल्वणं च वासः, सकुसुमं शिर इति । **शुचिशीलनं हि सरस्वत्याः संवननमामनन्ति** । ६०
**कारण्डवः** (बतख) ११६
**कारयित्री** प्रतिभा त्रिविधा सहजाहार्यौपदेशिकी चेति २३
**कारिका** अर्थप्रदर्शनकारिका कारिका ।। १५
**कालप्रिया** कन्नौजपार्श्ववर्त्ति क्षेत्रम् । १०८
**कालविभागः** १२,११३
**काव्यकविः** रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविश्चेति । २७
**काव्यगोष्ठी** यथासुखमासीनो राजा काव्यगोष्ठीं प्रवर्त्तयेत्, भावयेत्, परीक्षेत च । ६५
**काव्यनिर्माणकालाः** यथा निशायास्तुरीयो यामार्धः, स हि सारस्वतो मुहूर्त्तः। भोजनान्तः, सौहित्यं हि स्वास्थ्यमुपजनयति । व्यवायोपरमः, आर्त्तिविनिवृत्तिरेकाग्रतायतनम् । याप्ययानयात्रा। विषयान्तरविनिवृत्तं हि चित्तं यत्र यत्र प्रणिधीयते तत्र तत्र गुड्चीलागं लगति । यदा यदा चात्मनः क्षणिकतां मन्यते स स काव्यकरणकालः। ६३
**काव्यपाकः** २६,३०
**काव्यपुरुषः** ११,१२,१६,१७,२०
काव्यपुरुषं प्रजापतिः काव्यविद्याप्रवर्त्तनायै प्रायुङ्क्त ११
काव्यपुरुषोत्पत्तिः १२
**काव्यमातरः** सुजनोपजीव्य-कवि-सन्निधिः, देशवार्त्ता, विदग्धवादः, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः, पुरातनकविनिबन्धाश्च ६१
**काव्यमीमांसा** अष्टादशाधिकरणी १३
**काव्यविद्या** १ अष्टादशाधिकरणी, ६०
नामधातुपारायणे, अभिधानकोषः, छन्दोविचितिः, अलङ्कारतन्त्रं च काव्यविद्या ।।
**काव्यशास्त्र**-विरतौ विज्ञानिष्वभिरमेत, देशान्तरागतानां च विदुषां मानद्वारा सङ्गं कारयेत्, औचित्याद् यावत् स्थितिं पूजां च । वृत्तिकामाँश्चोपजपेत् संगृह्णीयाच्च । पुरुषरत्नानामेक एव राजोदन्वान् भाजनम् ६५

**काव्यार्थः** पुनर्द्विधा मुक्तक-प्रबन्ध-विषयत्वेन । तावपि प्रत्येकं पञ्चधा-
शुद्धः, चित्रः, कथोत्थः, संविधानकभूः, आख्यानकवाँश्च

**काव्यार्थयोनयः** ४६
काव्यार्थानां द्वादश योनय इत्याचार्याः, षोडशेति यायावरीयः
श्रुतिः, स्मृतिः, इतिहासः, पुराणम्, प्रमाणविद्या, समयविद्या,
राजसिद्धान्तत्रयी, लोकः, विरचना, प्रकीर्णकञ्चेति द्वादश,
उचितसंयोगेन, योक्तृसंयोगेन, उत्पाद्यसंयोगेन, संयोगविकारेण
च सह षोडशेति यायावरीयः ॥

**काशः** (पुष्पविशेषः) ११६

**कश्मीरजनपदः** १८

**काष्ठा** काष्ठा निमेषा दश पञ्च चैव ११३

**किङ्किरातवृक्षः** (शिलष्टपद) ६६

**किञ्च भोः** श्लोका अपि प्रमाणम् ?
यदि प्रमाणम् अयमपि श्लोकः प्रमाणं-
'यद्युदुम्बरवर्णानां घटीनामि'त्यादिः ।
प्रमत्तगीत एष भवतः । यत्त्वप्रमत्तगीतस्तत् प्रमाणमेवेतिगोनर्दीयः ३६

**कुचुमारः** आचार्यः औपनिषदनामकस्य काव्यविद्याङ्गस्य प्रवर्त्तयिता । ११

**कुडङ्गेश्वरः** उज्जयिनीश्वरः ९१

**कुन्तल** (राज्यम्) कृष्णागोदावरीनद्योरन्तरालक्षेत्रम् ।
तत्र राजा सातवाहनः १९,६१

**कुबेरः** उभयालङ्कारप्रवर्त्तयिताचार्यः ११

**कुमारः** कार्तिकेयः १७

**कुमारीद्वीपे** विन्ध्यश्च पारियात्रश्च, शुक्तिमानृक्षपर्वतः ।
महेन्द्र-सह्य-मलयाः सप्तैते कुलपर्वताः ॥ १०६

**कुमारीपुरम्** कन्याकुमारीतो हिमगिरिवर्त्तिनी बिन्दुसरोऽवधि योजनानां
दशशती चक्रवर्त्तिक्षेत्रम् । १०६

**कुम्भोद्भवः** रत्नेश्वरी रत्नमहानिधानम् । अगस्त्यः १०६

**कुविन्दः** सूरसेनेषु कुविन्दो नाम राजा । ६१

**कृत्प्रयोगरुचय** उदीच्याः ३२

**कृद्वृत्तिश्च** धातुविषया, कर्त्ता, हर्त्ता, कुम्भकारः, नगरकार इति कृदन्ताः ३२

**कृष्णनीलयोः**, कृष्णहरितयोः, कृष्णश्यामयोः, पीतरक्तयोः,
शुक्लगौरयोः, एकत्वेन निबन्धनं कविसमयः ९७

**केदार** एव कलमाः परिणामरम्याः ११७

**के पोतयन्त्ररहिता** जलधौ प्लवन्ते ६४

**केरलदेशः** १९
**कैशिकी** वृत्तिः १९
**क्रमुकपाकः** ३१
**क्रौञ्चः** पक्षी ११६
**खञ्जरीटः** पक्षी ११६
**खण्डम्** प्रतिबिम्बकल्पविकल्पः ७५
**ख्याता** नराधिपतयः कविसंश्रयेण । ३७
**गन्धर्ववत्** २०
**गान्धर्ववेदः** उपबेदविशेषः । ३३
**गुणवदलङ्कृतं** च वाक्यमेव काव्यम् । ३५
**गुणसमयस्थापना** ९५
**गुणौपादानिकम्** उपमन्युः ११
**गृहीतविद्योपविद्यः** काव्यक्रियायै प्रयतेत । ६०
**गोनर्दीयः** (राजशेखरः) ३६
**गौडाद्याः** संस्कृतस्थाः काशीतः पूर्वाब्धिं यावत् प्रसृता भूः । ६१
**गौडीया** रीतिः १८
**गौरश्वः** पुरुषो हस्तीति जातिवाचिनः शब्दाः, हरो हरिर्हिरण्यागर्भ
इति द्रव्यवाचिनः, श्वेतः कृष्णो रक्तः पीत इति गुण-
वाचिनः, प्रादयश्चादयश्चासत्त्ववचना नगरमुपप्रस्थितः पन्थाः,
वृक्षमनु विद्योतते विद्युद् इति कर्म-प्रवचनीयाः ३२
**गौरी सरस्वती** च मिथः सम्बन्धिन्यौ तस्थतुः । २०
**ग्रहगणितं** ज्यौतिषम् । १३
**घर्मात्ययः** वर्षाः ११६
**चक्रवर्त्तिन्** चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्त्तिनाम् ॥ १०६
**चक्रवर्त्तिक्षेत्रम्** दक्षिणात् समुद्राद् उदीच्यां बिन्दुसरो यावत्
भूभागः योजन-सहस्रात्मा । १९
**चक्रवाकः** रात्रिवियोगी पक्षी ११६
**चक्षुरादेरनेकवर्णोपवर्णनम्** कविसमयः ९८
**चतुःसमः** सुरभिर्द्रव्यविशेषः चतुरसमेति लोके प्रसिद्धः । ११५
**चतुरवस्थश्च** ऋतुरुपनिबन्धनीयः सन्धिः शैशवम्, प्रौढिः, अनुवृत्तिश्च । १२४
**चतुर्थे** (यामे) एकाकिनः परिमितपरिषदो वा पूर्वाह्णभागविहितस्य काव्यस्य
परीक्षा । रसावेशतः काव्यं विरचयतो न च विवेक्त्री ६२
दृष्टिः, तस्मादनुपरीक्षेत ॥

चतुर्थे यामे सप्रयत्नं प्रतिबुध्येत । ब्राह्मे मुहूर्त्ते मनः प्रसीदत् ताँस्तानर्थानध्यक्षयतीति आहोरात्रिकम् । ६३
चतुर्दश विद्यास्थानानि द्र. विद्यास्थन-पदम् ।
**चतुष्टयी** चतुर्धेव गतिर्वृत्तीनां प्रवृत्तीनाञ्च, देशानां पुनरानन्त्यम् । तत् कथमिव कात्स्न्येन परिग्रहः इत्याचार्याः । अनन्तानपि हि देशाँश्चतुर्धैवाकल्प्य कल्पयन्ति चक्रवर्त्तिक्षेत्रं सामान्येन, तदवान्तरविशेषैः पुनरनन्ता एवेति यायावरीयः १९
**चत्वार** एव कवयः, पञ्चमश्चादृष्टचरार्थदर्शी ७४
**चन्दनतरुः** १०६
**चन्द्रमसि** शशहरिणयोरैक्यं कविसमये
**चित्रं चित्राङ्गद** (नामाचार्यः), न तु यमकाचार्यः, स यमः । दलालो 'यम'-पदं न पठति । ११
**चित्राङ्गदः** तन्नामा चित्रबन्धाचार्यः ११
**चिन्तामणिः** अलौकिकः कविः ७४
**चुम्बकः** कविविशेषः ७४
**चूलिका** संवादिनी चूलिका तुल्यदेहितुल्यविकल्पः ८३
विसंवादिनी चूलिका तुल्यदेहितुल्यविकल्पः ८३
**चैत्रात् परं** प्रतिमासं मौहूर्त्तिकी दिवसवृद्धिः, निशाहानिश्च त्रिमास्याः ११३
**छन्दसां** प्रतिपादयित्री छन्दोविचितिः ॥
**छन्दस्वती** वाक् (पद्यमिति यावत्) १६
**छन्दोविनिमयः** प्रतिबिम्बकल्पविकल्पः ७६
**जगत्** द्यावापृथिव्यात्मकमेकं जगदि'त्येके ।
दिवस्पृथिव्यौ द्वे जगती इत्यपरे ।
स्वर्ग्य-मर्त्त्य-पातालभेदात् त्रीणि जगन्ती-'त्येके
तान्येव भूर्भुवःस्वः इत्यन्ये,
महर्जनस्तपःसत्यमित्येतैः सह सप्त इत्यपरे ।
तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दश इति केचित् ।
तानि सप्तभिः पातालैः सहैकविंशतिरिति केचित् ।
सर्वमुपपन्नमिति यायावरीयः, अविशेषो यदेकयति,
विशेषविवक्षा त्वनेकयति ॥१७.१-९॥ १०३-१०४
**जनपदः** १८,१९
**जल्पः** विजिगीषोः स्वपक्षसिद्धये छलजातिनिग्रहादिपरिग्रहो जल्पः १५
**'जातिगुणक्रिया'** समयस्थापना ९०
**जाती** (फलम्) जायफल १०६

**जीवञ्जीव:** चकोर: । परपुरप्रवेशसदृशविकल्प: ८७

**ज्ञानयोनिमरोचकितां** विशिष्टज्ञेयवति वचसि रोचकितावृत्तिरेवेति यायावरीय: ॥ २४

**टक्क:** स्थानविशेष: विपाशा-सिन्धुसरितोर्मध्यवर्त्ती भूभाग:, वाहीक-मिति, शाकलमिति चास्य नामान्तरम् । शाकलमित्यत्र राजधानी ॥ ६१

**टक्कभादानका:**, भादानकभूभागो भाट-नाम्ना प्रतीतो भाग: । तत्र भाषा- 'सापभ्रंशप्रयोगा: सकलमरुभुवष्टक्कभादानकाश्च' ६१

**टीका** यथासंभवमर्थस्य टीकनं टीका १५

**तत्त्वाभिनिवेशी** पुनर्मध्येसहस्रं यद्येक: ॥

**तदेव वाक्यं** काकुविशेषेण साकाङ्क्षम् । ४१

**तद्धितगू** (मू)ढा: पाणिनीया: । ३१

**तद्विरोधी** परपुरप्रवेशसदृशविकल्प: । ८८

**तर्का:** तर्का: षट् १-३ जैन-बौद्ध-चार्वाका:
४-६ साङ्ख्य-न्याय-वैशेषिका: १५

**ताम्रपर्णी** मौक्तिककामधेनु: १०६

**तिन्तिणीपाक:** ३१

**तुल्यदेहि**-प्रख्ये विषयपरिवर्त्तकल्प: । ८१

**तुल्यप्रभावावेव** हि शास्त्र-काव्य-कवी । उपकार्योपकारकभावं तु मिथ: शास्त्र-काव्यकव्योरनुमन्यामहे । शास्त्रसंस्कार: काव्यमनुगृह्णाति, शास्त्रैक-प्रवणता तु निगृहणाति । काव्यसंस्कारोऽपि शास्त्रवाक्य-पाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि २७

**तुषारगिरि:** (हिमालय:) १९

**तुष्टपुष्टाश्चास्य** सभ्या भवेयु: । स्थाने च पारितोषिकं लभेरन् ६५

**तैलबिन्दु:** प्रतिबिम्बकल्पविकल्प: ७३

**त्रपुसपाक:** आदावुत्तममन्ते मध्यमं त्रपुसपाकं काव्यम् ३१

**त्रपुसी** ११७

**त्रयस्त्रिका:** पाकानाम् १. पिचुमन्द-बदर-मृद्वीका-पाका:
२. वार्त्ताक-तिन्तिणीक-सहकार-पाका:
३. क्रमुक-त्रपुस-नालिकेर-पाका:
प्रथमे पाकास्त्रयस्त्याज्या: प्रतित्रिकम्,
द्वितीये मध्यमा: संस्कार्या:
शेषा ग्राह्या: । ३१

**त्रयी** ऋग्यजुस्सामवेदास्त्रयी १३

**त्रयीवार्त्तादण्डनीतयस्तिस्त्रो** विद्या इति मानवा: १५
**त्रिधा शास्त्रकवि:** य: शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं विधत्ते,
योऽपि काव्ये शास्त्रार्थं निधत्ते २७
**त्रिपथमर्थमध्यगीष्महि** यदुत अन्ययोनि:, निह्नुतयोनि:, अयोनिश्च । ७२
**त्रिविधा:** कवय: सारस्वत:, आभ्यासिक:, औपदेशिकश्च २३
**दक्षिणतो** राजसभायां भूतभाषाकवय:, तत: परं भुजङ्गगणिका:, प्लवक-
शौभिक-जम्भ-मल्ला:, शस्त्रोपजीविनोऽन्येऽपि तथाविधा:। ६५
**दक्षिणमातरिश्वा** १०७
**दक्षिणा दिक्** १९
**दक्षिणापथ-** जनपदा: महाराष्ट्र-माहिषक-अश्मक-विदर्भ-कुन्तक-क्रथकै-
शिक-सूर्पारक-काञ्ची-केरल-काबेर-मुरल-वानवासक-
सिंहल-चोड-दण्डक-पाण्ड्य-पल्लव-गाङ्ग-नाशिक्य-
कौङ्कण-कोल्ल-गिरिवल्लरप्रभृतय: । १०७
पर्वता: विन्ध्य-दक्षिणपाद-महेन्द्र-मलय-मेकल-
पालमञ्जर-सह्य-श्रीपर्वतादय: । १०७
नद्य: नर्मदा-तापी-पयोष्णी-गोदावरी-कावेरी-भैमरथी-
वेणा -कृष्णवेणा-वञ्जुरा-तुङ्गभद्रा-ताम्रपर्णी-
उत्पलावती- रावणगङ्गाद्या नद्य: ॥
व्युत्पत्तिर्मलयोत्पत्त्या व्याख्याता १०७
**दण्डनीति:** आन्वीक्षिकी-त्रयी-वार्त्तानां योगक्षेमसाधनो दण्ड: ।
तस्य नीति: । १५
दण्डनीतिरेवैका विद्येत्यौशनसा: । १५
**दत्तावसर: कवि:** य: सेवादिकमविरुन्धान: कवते स दत्तावसर: ।
तस्य कतिपये काला ६३
**दम्पती** सारस्वतेय-साहित्यविद्ये दम्पती प्रभावमयेन
वपुषा कविमानसनिवासिनौ २०
**दयितसुव्वृत्तयो** विदर्भा: ३२
**दशपुरजा:** ६२
**दाक्षिणात्त्या:** १९
**दाक्षिणात्या** प्रवृत्ति: १९
**दाक्षिणात्त्यार्थ:** ५०
**दामोदर-शेष-कूर्मादि:**, कमलासम्पदोश्चैक्यम् १०१
**दिश:** अनियतत्वाद् दिशामनिश्चितो दिग्विभाग इत्येके,
तथाहि यो वामनस्वामिन: पूर्व: ब्रह्मशिलाया पश्चिम:,

यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तर इति ।
अवधिनिबन्धनमिदं रूपम्, इतरत्तु अनियतमेवेति यायावरीयः १०८
प्राच्यवाचीप्रतीच्युदीच्यश्चतस्रो दिश इत्येके, ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी चाष्टौ दिश इत्येके, ब्राह्मी नागीया च द्वे । ताभ्यां सह दशैता इत्यपरे,
सर्वमस्तु, विवक्षापरतन्त्रा हि दिशामियत्ता ।
तत्र - चित्रा-स्वात्यन्तरे प्राची, तदनुसारेण प्रतीची ।
ध्रुवेणोदीची तदनुसारेणावाची । अन्तरेषु विदिशः ।
ऊर्ध्वं ब्राह्मी अधस्तान्नागीयेति ॥ १०८

**दिवस्पृथिव्यौ** द्वे जगती इत्यपरे १०३

**दिव्यमानुषश्चतुर्धा-**
दिव्यस्य मर्त्यागमने, मर्त्यस्य च स्वर्गगमने इत्येको भेदः ।
दिव्यस्य मर्त्यभावे, मर्त्यस्य च दिव्यभाव इति द्वितीयः
दिव्येतिवृत्तपरिकल्पनया तृतीयः
प्रभावाविर्भूतदिव्यरूपतया चतुर्थः ॥ ५३

**दीपालिकायां** विविधा विलासाः (शरदि) ११७

**दुर्बुद्धेस्तु** सर्वत्र मतिविपर्यासः । २१

**देवयोनयः** विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
सिद्ध-गुह्यक-भूताश्च पिशाचा देवयोनयः ॥ इति ३९

**देवसभायाः** परतः पश्चाद्देशः । देवसभ-पर्वत क्षेत्रम् ।
धेवर सरोवरपार्श्ववर्त्ती उदयपुर-नगर-भागः ।
देवसभ-सुराष्ट्र-दशेरक-त्रवण-भृगुकच्छ-कच्छीयानकर्त्ता-बुंदब्राह्मण-वाह-यवन-प्रभृतयो **जनपदाः**
गोवर्धन-गिरिनार-देवसभ-माल्यशिखरार्बुदादयश्च **पर्वताः** ।
सरस्वती-श्वभ्रवती-वार्त्तघ्नी-मही-हिडिम्बाद्या नद्यः ।
करीर-पीलु-गुग्गुलु-खर्जूर-करभादीनामुत्पादः । १०७

**देवोत्थानपर्व** बुध्यते च सह सुरैर्माधवः ॥ ११७

**देशकालविभागः** देशं कालं च विभजमानः
कविर्नार्थदर्शनदिशि दरिद्राति । १०३

**देशपर्वत**-नद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । ११०

**देशविभागः** (सप्तदशोऽध्यायः) १०३

**देशविशेषवशेन** भाषाश्रयणं दृश्यते । ६१

**देशान्तरव्यवहारः** २२

**दैत्यदानवासुराणामैक्यम्** कविसमयः १०१
**दोषाधिकरणं** धिषणः १९
**द्यावापृथिव्यात्मकमेकं** जगदित्येके १०३
**द्रव्यनियमः** यथा मलय एव चन्दनस्थानम्, हिमवानेव भूर्जोत्पत्तिस्थानम् ९३
**द्रव्यस्य** सतोऽनिबन्धनम्, यथा कृष्णपक्षे सत्या अपि ज्योत्स्नायाः,
शुक्लपक्षे त्वन्धकारस्य । ९२
**द्रावकः कविः** ७४
**द्वन्द्वविच्छित्तिः** तुल्यदेहितुल्यविकल्पः ८२
**द्वादशानामप्यादित्यानामैक्यम्** १००
**द्वादशवर्णमपि** सुवर्णं पावकपाकेन हेमीभवति ।
संस्कारो हि सर्वस्य गुण-मुत्कर्षति । ३१
**द्वितीये यामे** काव्यक्रियाम् ६२
**द्विरूप एवार्थसार्थः** विचारितसुस्थः, अविचारितरमणीयश्च । पूर्वमाश्रितानि
शास्त्राणि, तदुत्तरं च काव्यानीत्यौद्भटाः । ५५
**द्वीपान्तरव्यवहारः** २२
**द्वैपायनः** (व्यासः) १७
**धनुर्वेदीयोऽर्थः** ५१
**धातुवादः** परपुरप्रवेशसदृशविकल्पः ८७
**धान्यकुट्टनचित्रम्** ११९
**धिषणः** दोषाधिकरणप्रवर्त्तयिताऽऽचार्यः ११,१६
**न च दृप्येत**, दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति । ६२
**न च स्वकृतिं** बहु मन्येत । पक्षपातो हि गुणदोषौ विपर्यासयति ६२
**नटनेपथ्यम्** अर्थहरणप्रतिबिम्बकल्पविकल्प आलेख्यप्रख्यपरिसंख्या ७६,८०
**न नवीनमेकाकिनः** पुरतः पठेत्, स हि स्वीयं ब्रुवाण कतरेण
साक्षिणा जीयते । ६२
**नन्दिकेश्वरः** रसाधिकारिकं नन्दिकेश्वराचार्यः ११
**नर्मदा** (पद्य १२.३७) ७७
**न ह्यप्रवर्तित**-प्रदीपास्तमसि तत्त्वार्थसार्थमध्यक्षयन्ति । १३
**नानाशाखाधीतानां** मन्त्राणां विनियोजकं सूत्रं कल्पः । सा यजुर्विद्या । १३
**नागसर्पयोरैक्यम्** कविसमयः १०१
**नारायणमाधवयोरैक्यम्** कविसमयः १००
**नार्धकृतं पठेत्**, असमाप्तिस्तस्य फलम् इति कविरहस्यम् ६२
**नालिकेरपाकः** ३१
**नास्त्यचौरः** कविजनः ७१

**नास्त्यचौरो** वणिग्जन्य: ७१
**नियतस्वभावम्** विदग्धभणितिभङ्गीनिवेद्यं वस्तुनो रुपम् इत्यवन्तिसुन्दरी ५७
**नियमस्तु यथा** ग्रीष्मादौ संभवतोऽपि कोकिलानां विरुतस्य वसन्त एव मयूराणां वर्षास्वेव विरुतस्य नृत्तस्य च निबन्धः । ९४
**निराकाङ्क्षम्** तदेव वाक्यं काकुविशेषेण साकाङ्क्षम्, तदेव काक्वन्तरेण निराकाङ्क्षम् । ४१
**निराकाङ्क्षा काकु** वाक्योत्तरभाविनी । ४१
**निरुक्तम्** निर्वचनं निरुक्तम् । १३
**निषण्णः** कविः यः काव्यक्रियायामभिनिविष्टः कवते, न च नैष्ठिकवृत्तिः स निषण्णः तस्यापि त एव कालाः । ६३
**निह्नुतयोनिः** द्विधा तुल्यदेहितुल्यः, परपुरप्रवेशसदृशश्चेति । ७२
**नीराजना** वाजि-भट-द्विपानाम् । ११७
**नैसर्गिकीमरोचकितां** हि संस्कारशतेनापि रङ्गमिव कालिकां ते न जहति । २४
**पञ्चप्रकारमपि** पदजातं मिथः समन्वीयमानमानन्त्याय कल्पते । तज्जन्मा चैष विदुषां वादो यत किल दिव्यं समासहस्रं बृहस्पतिर्वक्ता शतक्रतुश्चाध्येता तथापि नान्तः शब्दराशेरासीदिति ॥ ३२
**पञ्चमी साहित्यविद्येति** यायावरीयः, सा हि चतसृणामपि विद्यानां निष्यन्दः । १५
**पञ्च शतानि** जलम्, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात् समुद्रादद्रिराजं हिमवन्तं यावत् परस्परमवगम्यास्ते । १०६
**पञ्जिका** विषमपदभञ्जिका पञ्जिका १५
**पट्टवस्त्रम्** पट्टबन्धः ६५
**पदम्** व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निर्दिष्टः तदभिधेयोऽर्थः । तौ पदम् । ३२
**पदवाक्यविवेकः** ३२
**पदविवेकः** १२
**पद्धतिः** सूत्रवृत्तिविवेचनं पद्धतिः १५
**परप्रयुक्तयोः** शब्दार्थयोरुपनिबन्धो हरणम् । ६६
**परमेष्ठी** (ब्रह्मा) २०
**परिणताख्यानम्** (वाक्यम्) ३३
**परिणामे** तु यथार्थदर्शी स्यात्, विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते । २४
**परिवर्त्तकः** कविः ७१
**परैश्च परीक्षयेत्**, यदुदासीनः पश्यति, न तदनुष्ठातेति प्रायोवादः । ६२
**पश्चिमेनापभ्रंशिनः** कवयः, ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकार-वर्द्धकि-लोहकाराः, अन्येऽपि तथाविधाः । ६५

**पाक:** पाक: परिणाम:, सुपां तिङां च व्युत्पत्ति: परिणाम इति मङ्गल: ३०
सौशब्द्यमेतत्, पदनिवेशनिष्कम्पता पाक इत्याचार्या: ३०
आग्रह-परिग्रहादपि पदस्थैर्यपर्यवसाय:, तस्मात् पदानां परिवृत्तिवैमुख्यं पाक इति वामनीया: ।
इयमशक्तिर्न पुन: पाक; इत्यवन्तिसुन्दरी, रसोचितशब्दार्थसूक्ति-निबन्धन: पाक: ३०
सततमभ्यासवशत: सुकवेर्वाक्यं पाकमात्यातीत्याचार्या: ३१
पाकोऽभिधाविषय इति यायावरीय: । ३१
पिचुमन्दपाक: ३१
बदरपाक: ३१
मृद्वीकापाक: ३१
**पाञ्चरात्र:** 'सर्वाञ्ज्वरान् घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवा:' ४९
**पाञ्चाला:** हिमालयोपत्यकातो विनशनप्रयागयो:, गङ्गया विभाजिते अहिच्छत्र-काम्पिल्ये व्याप्य प्राप्तप्रसरो भूभाग: । अन्तर्वेद्या नितान्तं परिष्कृतमिदं क्षेत्रम् । कान्यकुब्जनगरमत्र राजधानी । १८
पाञ्चालजनपद: १८
पाञ्चालमध्यम् १८
पाञ्चालमध्यमा प्रवृत्ति: १८
**पाञ्चाली रीति:** १८
**पाठप्रतिष्ठा** १२
**पाठप्रशंसा** (पद्य ७.३१-३४) ४३
**पारमेश्वरं** वच: पारमेश्वरमेव वचो दिव्यं वच: ३९
**पाराशर:** अतिशय-प्रवर्त्तक आचार्य: । ११
**पारियात्रा:** विन्ध्यगिरे: पश्चिमोत्तरो भाग: कुलपर्वतत्वेन कुमारीद्वीपे प्रतीत: । ६१
**पालमञ्जर**-देश: दक्षिणापथे महाडपार्श्ववर्त्ती पालनामा भूभाग: ।
वङ्गीया: पाला राजशेखरात् परं शतकपञ्चकानन्तरीया: । २०
**पाल्यकीर्त्ति:** वक्तृप्रकृतिविशेषायत्ता तु रसवत्ता । यमर्थं रक्त: स्तौति तं विरक्तो विनिन्दति, मध्यस्थस्तु तत्रोदास्ते इति पाल्यकीर्त्ति: ।
जैनो वैयाकरण: पाल्यकीर्त्रिरत्र स्मर्यते इतिहासविद्भि: ।
शाकटायनस्यापरमभिधानं पाल्यकीर्त्तिरिति केचित् । ५७
**पाल्यकीर्त्तिरवन्तिसुन्दरी** चेत्युभयोर्मतमुपपन्नमिति यायावरीय: ५७
**पितुर्गुरोर्नरेन्द्रस्य** सुतशिष्यपदातय:, अविविच्यैव काव्यानि स्तुवन्ति च पठन्ति च' (पद्य १०.१०) ६२
**पिशाचादय:** शिवानुचरा:, स्वभूमौ संस्कृतवादिन:, मर्त्ये च

भूतभाषया व्यवहरन्ति ॥ ४०
**पीतरक्तयोरेकत्वेन** निबन्धनम् कविसमयः । ९७
**पुत्रात् पराजयो** द्वितीयं(य) पुत्रजन्म । १६
**पुराणकविक्षुण्णे** वर्त्मनि दुरापमस्पृष्टं वस्तु, ततश्च तदेव संस्कर्त्तुं
प्रयततेति आचार्याः । ७२
नेति वाक्पतिराजः । ७२
**पुराण-प्रविभेद** एवेतिहासः । १४
**पुलस्त्यः** 'वास्तव'- वर्ग- प्रवर्त्तक ऋषिः ११
**पूर्वः पूर्वः** (सारस्वतः, आभ्यासिकः, औपदेशिक इत्येतेषु कविषु
पूर्वः पूर्वः) श्रेयानिति श्यामदेवः । उत्कर्षः श्रेयानिति
यायावरीयः । स चानेकगुणसन्निपाते भवति । २३
**पूर्वेण प्राकृताः** कवयः, ततः परं नट-नर्त्तक-गायन-वादन-वाग्जीवन-
कुशीलवा- तालाव-चरा अन्येऽपि तथाविधाः ॥ ६५
**पृथिव्यां सप्त** महाद्वीपाः । १०४
**पृथूदक-क्षेत्रम्** पञ्चापगतकरनालक्षेत्रे थानेश्वरस्य पश्चिमतश्चतुर्दश
मीलदूरवर्त्ती 'सरस्वती'-तटे पहवाभूमिभागः । १०७
**पृथूदकात् परत** उत्तरापथः । १०७
**पौरुषेयं वाङ्मयम्** पुराणम्, आन्वीक्षिकी, मीमांसा स्मृतय
इति चत्वारि शास्त्राणि । १२
**प्रकीर्णम्** हस्तिशिक्षीयः, रत्नपरीक्षीयः, धनुर्वेदीयः,
योगशास्त्रीयः, उचितसंयोगः, योक्तृसंयोग
उत्पाद्यसंयोगः, संयोगविकारः ५१-५२
**प्रकीर्णद्रव्यकविसमयः** यथा क्षीरक्षारसमुद्रयोरैक्यम् सागर-महासमुद्रयोश्च ९३
**प्रचेताः** (ब्रह्मा) अनुप्रास-शास्त्र-प्रवर्त्तक आचार्यः ११
**प्रतिकञ्चुकम्** परपुरप्रवेशप्रख्यविकल्पः ८६
**प्रतिबिम्बकल्पः** परिहरणीयः ७८
**प्रतिबिम्बकल्पालेख्यप्रख्य**-तुल्यदेहितुल्य-परपुरप्रवेशप्रतिमेति चतुर्णां ४x८=
द्वात्रिंशद्हरणोपायाः ७३
**प्रतिभा** या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविध-
मधिहृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थ-
सार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव ।
यतो मेधाविरुद्र-कुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते । २२
जन्मसंस्कारयोनिराहार्या प्रतिभा २३
जन्मान्तरसंस्कारापेक्षिणी सहजा प्रतिभा २३

प्रतिभाव्युत्पत्तिमाँश्च कविः कविः २७
प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्याविति यायावरीयः । न खलु लावण्यलाभादृते रूपसम्पद्, ऋते रूपसम्पदो वा लावण्यलब्धिर्महते सौन्दर्याय । २७
प्रतिभाव्युत्पत्त्योः प्रतिभा (शक्तिः) श्रेयसीत्यानन्दः (दवर्धनः), सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति । यदुक्तम् - (ध्व.-३.५वृ.)
अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते ॥
कारयित्री प्रतिभा २३
भावयित्री प्रतिभा । भावयित्री कवेः श्रममभिप्रायं च भावयति । तया खलु फलितः कवेर्व्यापारतरुः । अन्यथा सोऽवकेशी स्यात् ।२४

**प्रतिभासः** न स्वरूपनिबन्धनमिदं रूपमाकाशस्य, सरित्सलिलादेर्वा, किन्तु प्रतिभासनिबन्धनमिति यायावरीयः । ५५

**प्रत्यक्षे तु कवौ** लोकः सावज्ञः सुमहत्यपि । ६१
प्रत्यक्षकविकाव्यं च रूपं च कुलयोषितः ।
गृहवैद्यस्य विद्या च कस्मैचिद् यदि रोचते ॥ ६१

**प्रत्यापत्तिः** अन्ययोनि-आलेख्यप्रख्य विकल्पः ८१

**प्रवृत्तिः** वेषविन्यासक्रमः प्रवृत्तिः । १८,१९

**प्राकृतम्** ६१

**प्राची दिक्** १८

**प्राचीनामलकम्** ११७

**प्राचेतसः** १७

**प्राणभृतां** प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति । १८

**प्रायोजनिककविः** यस्तु प्रस्तुतं किञ्चन संविधानकमुद्दिश्य कवते स प्रायोजनिकः। तस्य प्रयोजनवशात् कालव्यवस्था । ६३

**प्रियतद्धिता** दाक्षिणात्याः ३२

**प्रेम्णा तुल्यं** बन्धनं नास्ति जन्तोः । ७५

**बहुकालजन्मनोऽपि** शिवचन्द्रमसो बालत्वम् (कविसमयः) १००

**बहुज्ञता व्युत्पत्ति** रित्याचार्याः, सर्वतोदिक्का हि कविवाचः २६

**बालस्त्रीहीनजातीनां** काव्यं याति मुखान्मुखम् । ६२

**बुद्धिः** अनागतस्य प्रज्ञात्री प्रज्ञा २१
वर्त्तमानस्यार्थस्य मन्त्री मतिः २१

**बुद्धिमान्** (शिष्यः) २१

**बुद्धिमदाहार्य** बुध्योः कालनियमो नियममुद्रा, औपदेशिकस्य पुनरिच्छैव सर्वे कालाः, सर्वाश्च नियममुद्राः । ६३
**बृहताम्पतिः** (धिषणः) १६
**बौद्धसिद्धान्तीयः** ४९
**ब्रह्मपुण्ड्रदेशः** कदाचिदिदानीन्तनो ब्रह्म (वरमा)देशः । १८
**ब्रह्मरथयानम्** ६५
**ब्रह्मविष्णुरुद्रगुहबृहस्पति**-भार्गवादिशिष्येषु चतुष्षष्टावुपदिष्टं वचः पारमेश्वरम् । ३९
**ब्रह्मशिला** कन्नौजपूर्वभागः १०८
**ब्राह्मं वचः पञ्चधा** १. स्वायम्भुवम् २. ऐश्वरम् ३. आर्षम् ४. आर्षीकम् ५. आर्षिपुत्रकञ्चेति । ३९
**ब्राह्मणम्** मन्त्राणां स्तुतिनिन्दाविनियोगग्रन्थः । १३
**भक्तिः** (लक्षणा) १७
**भरतः** रूपकनिरूपणीयनाम्नोऽङ्गस्य प्रवर्त्तक आचार्यः ११
**भाण्डीरः** (पुष्पपादपः) ११६
**भादानकः** ६१
**भारतम्** १८
**भारती वृत्तिः** नृत्तवाद्यादि १८
**भावकाश्च** द्विविधाः अरोचकिनः सतृणाभ्यवहारिणश्चेति मङ्गलः, कवयोऽपि भवन्तीति वामनीयाः, चतुर्धा भवन्तीति यायावरीयः मत्सरिणस्तत्त्वा-भिनिवेशिनश्च । २४
**भावमुद्रा** परपुरप्रवेशसदृशविकल्पः । ८८
**भाषानियमः** स्वभवने हि भाषानियमं यथा प्रभुर्विदधाति तथा भवति । श्रूयते हि मगधेषु शिशुनागो नाम राजा । तेन दुरुच्चारानष्टौ वर्णानपास्य स्वान्तःपुर एव प्रवर्त्तितो नियमः । टकारादयश्चत्वारो मूर्धन्याः, तृतीयवर्जम् ऊष्माणस्त्रयः एकः क्षकारश्चोति ॥ ५७
भाषान्तरे निबद्धं भाषान्तरेण निबध्यते नटनेपथ्ये ७६
**भुवनकोशः** १२
**भूतभाषा** ६१
**भूर्भुवस्स्वस्त्रयीं** कृत्स्नामपि व्यासज्य वर्त्तन्ते चतुर्दश विद्यास्थानानि । १४
**भूर्भुवःस्वर्महर्जनस्तपस्सत्यमिति** सप्त इत्यपरे १०३
**भूर्लोकः पृथिवी** १०४
**भृगुकच्छजनपदः** भडौचस्तत्पार्श्ववर्ति क्षेत्रञ्च १९
**भृगुसूतिः** भार्गवः १७

**भौजङ्गमम्** महाप्रभावत्वाद् भौजङ्गममपि दिव्यम् ४१

**भौमवत्** स्वर्ग्योऽपि कविसमयः ९९

**भौमस्वर्ग्यवत्** पातालीयोऽपि कविसमयः १०१

**भ्रामकः** कविविशेषः ७४

**मङ्गलः** २२

**मतिः** बुद्धिः, प्रज्ञा २१

**मत्सरिणस्तु** प्रतिभातमपि न प्रतिभातम्, परगुणेषु वाचम्यमित्वात् । २४

**मध्यदेशः** पद्य १०.२ ६१,१०८

दक्षिणोत्तरापथयोर्मध्ये मध्यदेश इति कविव्यवहारः ।
न चायं नानुगन्ता शास्त्रार्थस्य । यदाहुः-
हिमवद्विन्ध्ययोर्मध्यं यत् स्याद् (पश्चाद्) विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥ १०८
यो मध्येमध्यदेशं निवसति स कविः सर्वभाषानिषण्णः ।' इति ६१

**मध्येसभम्** चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका । तस्यां राजासनम्। तस्य चोत्तरतः संस्कृतकवयो निविशेरन् । बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते । यस्त्वनेकत्र प्रवीणः स संक्रम्य तत्र तत्रोपविशेत् । ६४

**मरिचम्** १०५

**मरुभूः** ६१

**मर्त्यावतारः**-व्यवहाररुचेर्भगवतो वासुदेवस्य वचो वैष्णवम् । तन्मानुषमिति व्यपदिशन्ति । तच्च त्रिधा रीतित्रयभेदेन । यदाहुः-
वैदर्भी पाञ्चाली गौडीया चेति रीतयस्तिस्रः । ४१

**मलयः** दक्षिणोत्तरसमुद्रतटीयश्चन्दनप्रभवः शैलविशेषः १९,१०६

**महाकविः** द्वित्रैर्गुणैः कनीयान् कविः, पञ्चकैर्मध्यमः, सर्वगुणयोगी महाकवि । २९

**महात्मनां** संवादिन्य एव बुद्धयः, एकमेवार्थमुपस्थापयन्ति, तत्परित्यागाय तानाद्रियेतेति केचित्, नेति यायावरीयः।
सारस्वतं चक्षुरवाङ्मनसगोचरेण प्रणिधानेन दृष्टमदृष्टं वार्थजातं स्वयं विभजति ।
यदाहुः
**सुप्तस्यापि महाकवेः शब्दार्थौ सरस्वती**
**दर्शयति, तदितरस्य तत्र जाग्रतोऽपि अन्धं चक्षुः ।** ७२

**महाप्रभावं** भौजङ्गममपि दिव्यम् । ४१

**महाराष्ट्रम्** १९

**महोदयजनपदः** (पाञ्चालजनपदः) १८
**माञ्जिष्ठं** रौचनिकं सौरं सैन्धवं वैयासीयभिति तद्धितान्ताः, प्रातिपदिकविषया चेयम् । ३२
**माणिक्यपुञ्जः** तुल्यदेहितुल्यविकल्पः ८४-८५
**माणिक्यानां** शोणता, पुष्पाणां शुक्लता, मेघानां कृष्णता च ९६
**मातरोऽष्टौ** कवित्वस्य ६०
**मालती** वर्षापुष्पलता ११६
**मालवजनपदः** १९
**माहिष्मत्याः** परतो दक्षिणापथः । १०७
**मीमांसा** निगमागमानां न्यायैः सहस्त्रेण विवेक्त्री मीमांसा । सा द्विविधा विधिविवेचनी ब्रह्मनिदर्शनी च । १४
**मीमांसिष्यामहे** ११
**मुक्तके कवयो**ऽनन्ताः, सङ्घाते कवयः शतम्, महाप्रबन्धे तु कविरेको द्वौ, दुर्लभास्त्रयः । ६४
**मुक्तेतिवृत्तो** मुक्तकः (प्रबन्धः) ५७
**मुहूर्त्तः** त्रिंशत्कलश्चैव भवेन्मुहूर्त्तः ११३
**मेकलदेशः** १९
**मेरुः** भगवान् मेरुर्वर्षपर्वतः । तस्य चतुर्दिशम् इलावृतं वर्षम् । उत्तरेण त्रयो वर्षगिरयः-नीलः, श्वेतः, शृङ्गवाँश्च । रम्यकं, हिरणमयम्, उत्तराः कुरव इति क्रमेण त्रीणि तेषां वर्षाणि । १०५
**मेरोर्दक्षिणेनापि** त्रय एव वर्षपर्वताः निषधो, हेमकूटो हिमवाँश्च । हरिवर्षम्, किम्पुरुषम्, भारतमिति च त्रीणि वर्षाणि । तत्रेदं भारतं वर्षम्। अस्य च नव द्वीपाः-इन्द्रद्वीपः, कसेरुमान् ताम्रपर्णः, गभस्तिमान्, नागद्वीपः, सौम्यः, गन्धर्वो, वरुणः, कुमारीद्वीपश्च । १०५
**मौहूर्त्तिकी** निशावृद्धिः, दिवसहानिश्च । ११३
**यजुष् वेदः** १३
**यजूंषि** अच्छन्दांसि अगीतानि यजूंषि १३
**यमः** यमकप्रवर्त्तक आचार्यः ११
**यमकानि यमः** ११
**यादृशाकारश्चित्रकरस्तादृशाकारमस्य** चित्रमिति ६०
**यायावरीयः** राजशेखरः अग्रेपि भूयांसि वाक्यानि १२
**योक्तृसंयोगार्थः** ५२
**योगवृत्तिगर्भ** १९

**योगवृत्तिपरम्परा** १८
**योगशास्त्रीयः** ५१
**योगिनीमतम्** (वचः) यथा-दुःखेन्धनैक० पद्य ७.१४ ४१
**योषितोऽपि कवीभवेयुः** । संस्कारो ह्यात्मनि समवैति, न स्त्रैणं पौरुषं वा विभागमपेक्षते। श्रूयन्ते दृश्यन्ते च ६३
राजपुत्र्यो महामात्यदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रतिहतबुद्धयः कवयश्च ।
**रत्नपरीक्षीयः** अर्थः ५१
**रत्नमाला** तुल्यदेहितुल्यविकल्पः ८२
**रत्नेश्वरः** पर्वतः १०६
**रसाधिकारिकं** नन्दिकेश्वरः ११
**राजचरितम्** राजचरितं च राजोपजीविनोऽनुकुर्युः । राज्ञ एव ह्यसावुपकारो यद् राजोपजीविनां संस्कारः । ६४
**राजचर्या** राजा कविः कविसमाजं विदधीत । ६४
राजनि कवौ सर्वो लोकः कविः स्यात् । ६४
**राजसभा** मध्येसभं वेदिका । तत्र राजासनम् । तस्योत्तरतः कवयः, ततः परं वेदविद्याविदः, प्रामाणिकाः, पौराणिकाः, स्मार्त्ताः, भिषजो मौहूर्त्तिका अन्येऽपि तथाविधाः । ६५
**राजसिद्धान्तत्रय्यामर्थशास्त्रीयोऽर्थः** शम-व्यायामाभ्याम् । ४९
नाट्यशास्त्रीयः 'एवं धारय देवी'ति ८.२६ पद्यम् । ४९
**राजा काव्यपरीक्षायै** सभां कारयेत् । ६५
**राजाश्रयेण च गताः कवयः प्रसिद्धिम्** । ३७
**राज्ञः समोऽस्ति न कवेः परमोपकारी** । ३७
**राज्ञो न चास्ति कविना सदृशः सहायः** । ३७
**रामायणम्** इतिहासः १७
**रीतयस्तु** तिस्रः १९
**रूपकनिरूपणीयं** भरतः ११
**रेवा** पुण्यसलिला नर्मदा ७८
**लङ्का** रावणराजधानी १०७
**लाटदेश्याः** परिचितरुचयः प्राकृते लाटदेश्याः ६१
**लावणः सागरः** १०४
[1]लावणो [2]रसमयः [3]सुरोदकः [4]सार्पिषो [5]दधिजलः [6]पयःपयाः।
स्वादुवारिरुदधिश्च[7] सप्तमस्तान् परीत्य त इमे व्यवस्थिताः ।।
**लेखकः** सदःसंस्कारविशुद्ध्यर्थं 'सर्वभाषाकुशलः, शीघ्रवाक्, चार्वक्षरः

इङ्गिताकारवेदी, नानालिपिज्ञः, कविः, लाक्षणिकश्च लेखकः स्यात् । तदसन्निधावतिरात्रादिषु पूर्वोक्तानामन्यतमः । ६०

**लोकोत्तरस्य** काव्यस्य यथार्हा पूजा, कवेर्वा । ६५

**लोको निरङ्कुशः** ६१

**लौकायतिकः** ४८

**लौकिकः** लौकिको द्विधा प्राकृतो व्युत्पन्नश्च । ५०

**वङ्गजनपदः** १९

**वङ्गदेशः** १८

**वचांसि** सच्छन्दांसि १७

**वत्सगुल्मः** आम्रकूटे यो वंशगुल्मः स एव श्रीनर्मदायाः प्राकट्यदेशः १९

**वर्णानां** स्थानकरणप्रयत्नादिभिर्निष्पत्तिनिर्णयिनी शिक्षा । १३

**वर्णनियमः** पौरस्त्यानां श्यामो वर्णः, दाक्षिणात्यानां कृष्णः पाश्चात्त्यानां पाण्डुः, उदीच्यानां गौरश्च । ११०

**वल्लभसमासवृत्तयो** गौडाः ३२

**वसन्ते दक्षिणो** वायुः । ११४

**वस्तुसञ्चारः** परपुरप्रवेशसदृशविकल्पः । ८६

**वाक्तत्त्वमुन्मिषति** कस्यचिदेव पुंसः ६४

**वाक्यम्** पदानामभिधित्सितार्थग्रन्थनाकरो वाक्यम् । ३३

वाक्यं वचनमिति व्यवहरन्ति । ३९

**वाक्यभेदाः** ३९

**वाक्यं दशधा** [१]एकाख्यातम् [२]अनेकाख्यातम् [३]आवृत्ताख्यातम् [४]एकाभिधेयाख्यातम् [५]परिणताख्यातम् [६]अनुवृत्ताख्यातम् [७]समुचिताख्यातम् [८]अध्याहृताख्यातम् [९]कृदभिहिताख्यातम् [१०]अनपेक्षिताख्यातम् इति । ३३

त्रिधा वाक्यं च प्रणेतृभेदेन त्रिधा ब्राह्मं शैवं वैष्णवमिति । ३९

पञ्चधा वायुप्रोक्तपुराणादिभ्य उपलब्धं यदुत ब्राह्मं वचः पञ्चधा-स्वायम्भुवम्, ऐश्वरम्, आर्षम्, आर्षीकम् आर्षिपुत्रकञ्च । ३९

स्वयम्भूर्ब्रह्मा, तस्य स्वायम्भुवम् । ३९

**वाक्यविधयः** १२

**वाक्यविवेकः** १२

**वाक्यव्यापाराः** वाक्यस्य च त्रिधाऽभिधाव्यापारः इत्यौद्भटाः-वैभक्तः, शाक्तः, शक्तिविभक्तिमयश्च । ३३

**वाग्देवी** १७

**वाग्योगविद्** कः वाग्योगवित् ?

यो हि शब्दाञ्जानाति, अपशब्दानप्यसौ जानाति ।
यथैव च शब्दज्ञाने धर्मः, एवमेवापशब्द(ा)ज्ञानेऽप्यधर्मः ।
अथवा भूयानधर्मः प्राप्नोति । ३६
योऽवाग्योगविद् अज्ञानं तस्य शरणम् । अथ ३६
यो वाग्योगविद् विज्ञानं तस्य शरणम् । ३६

**वाङ्मनःशौचे** शास्त्रजन्मनी ६०

**वादः** मध्यस्थयोस्तत्त्वावबोधाय वस्तुतत्त्वपरामर्शो वादः । १५

**वामनस्वामी** 'वामनाऽवतार-मन्दिरम्' कन्नौज-नगरे । दलालः । १०८

**वायुस्कन्धाः** सप्त तानि (जगन्ति) सप्तभिर्वायुस्कन्धैः
सह चतुर्दशेति केचित् । १०४

**वाराणसी** तत्र वाराणस्याः पुरतः पूर्वदेशः । तत्राङ्ग-कलिङ्ग-कोसल-
तोसलोत्कल- मगध-मुद्गर-विदेह-नेपाल-पुण्ड्र-प्राञ्ज्योतिष-
तम्रलिप्तक-मलद-मल्लवर्त्तक-सुह्म-ब्रह्मोत्तरप्रभृतयो जनपदाः । १०७
बृहद्गृह-लोहित-गिरि-चकोर-दर्दुर-नेपाल-कामरूपादयः
पर्वताः । शोणलौहित्यौ नदौ ।
गङ्गा-करतोया-कपिशाद्याश्च नद्यः ।
लवली-ग्रन्थिपर्ण-कालागुरु-द्राक्षा-कस्तूरिकादीनामुत्पादः । १०७

**वार्त्तकपाकः** ३१

**वार्त्तविद्या** कृषि पाशुपाल्ये वाणिज्या च वार्त्ता । १५

**वार्त्तादण्डनीतिर्द्वे** विद्ये इति बार्हस्पत्याः । १४

**वार्त्तिकम्** उक्तानुक्त-द्विरुक्तचिन्ता वार्त्तिकम् । १५

**वाल्मीकिः** १७

**वासुदेव**--सातवाहन-शूद्रक-साहसाङ्कादीन् सकलान् सभापतीन्
दानमानाभ्यामनुकुर्यात् । ६५

**वास्तवं पुलस्त्यः** ११

**वाहीकजनपदः** व्यास-सतलजयोर्मध्यवर्त्ती जनपदः । १८

**वाह्लवेयजनपदः** १८

**वाह्लीक-जनपदः** वाहीक जनपद एव वाह्लीकः १८

**वितण्डा** स्वपक्षस्याऽपरिग्रहीत्री परपक्षस्य दूषयित्री वितण्डा । १५

**वितर्कगर्भा काकुः** (नवजलधरः स०) ४१

**विदर्भः** १९

* **विदर्भेषु** वत्सगुल्मम् १९

**विद्यास्थानानि** चतुर्दश यदुत वेदाश्चत्वारः, षडङ्गानि, चत्वारि शास्त्राणि । १४

**विधानापहारः** तुल्यदेहितुल्यप्रविकल्पः । ८३

**विप्रसृतिश्च** शक्तिः प्रतिभाव्युत्पत्तिभ्याम् । २२
**विभूषणमोषः** अन्ययोनि-आलेख्यप्रख्यविकल्पः ७९
विरचना कविमनीषानिर्मितं कथातन्त्रम् अर्थमात्रं वा विरचना । ५०
**विरिञ्चः** १६
**विलासविन्यासक्रमो** वृत्तिः । १९
**विवृतक्रियातन्त्रा** मन्त्राः । १३
**विवेकानुसारेण** हि बुद्धयो मधु निःष्यन्दन्ति । २४
**विशेषोक्तिः** अन्ययोनि-आलेख्यप्रख्यविकल्पः ८०
**विषयपरिवर्त्तः** तुल्यदेहितुल्यविकल्पः ८१
**वृत्ति** सूत्राणां सकलसारविवरणम् १५
वृत्तिर्विनयग्रहणं च, स्थितिहेतुर्लोकयात्रायाः । १५
वृत्तयः पञ्च सुब्वृत्तिः, समासवृत्तिः, तद्धितवृतिः,
कृद्वृत्तिः, तिङ्वृत्तिश्चेति । ३२
वृत्तिरीती स्वरूपतः । १९
**वेदाङ्गनि षड्** शिक्षा, कल्पो, व्याकरणम्, निरुक्तं, छन्दोविचितिः ज्यौतिषञ्च । १३
वेदोपवेदात्मा सार्ववर्णिको गेयवेदः' इति द्रौहिणिः । १३
**वैदर्भी रीतिः** १९
**वैदिशो** जनपदः १९
**वैनोदिकं** कामदेवः ११
**व्यस्तकः** अयोनिप्रतिबिम्बकल्पविकल्पः ७५
**व्युत्क्रमः** अन्ययोनि-आलेख्यप्रख्यविकल्पः । ७९
**व्युत्पत्तिः** उचितानुचितविवेको व्युत्पत्तिरिति यायावरीयः । २६
व्युत्पित्सोः कौतुकिनः सर्वस्य सर्वत्र प्रथमं सा । प्रतिभानविशेष-विकलता हि न गुणाऽगुणयोर्विभागसूत्रं पातयति । ततो बहु त्यजति बहु च गृह्णाति ॥
वेदाख्यानोपनिबन्धनप्रायं पुराणम् अष्टादशधा । १४
वैकुण्ठो विष्णुः । ११
सुब्वृत्तिर्वाङ्मयस्य माता ।
सुब्वृत्तिरेव समासवृत्तिः ।
व्याससमासाबेवा-नयोर्भेदहेतू । ३२
शक-केकय-वोक्काण-हूण-बाणायुज-कम्बोज-वाह्लीक-वह्लव-लिम्पाक-कुलूत-कीर-तङ्गण-तुषार-तुरुष्क-बर्बर-हर-हूर-बहूहुक-सहुण-हंसमार्ग-रमठ-करकण्ठ-प्रभृतय <u>उत्तरापथे जनपदाः</u> । १०७
**उत्तरापथे** पर्वताः

हिमालय-कलिन्दे-न्द्रकील-चन्द्राचलादयः पर्वताः । १०७
गङ्गा-सिन्धु-सरस्वती-शतद्रु-चन्द्रभाग-यमुनेरावतीवितस्ता-
विपाशा-कुहू-देविकाद्या नद्यः । १०७
सरल-देवदारु-द्राक्षा-कुङ्कुम-चमराजिन-सौबीर-
स्रोतोऽञ्जनसैन्धव-वैदूर्य-तुरङ्गाणामुत्पादः । १०७

**शक्तिः** समाधिरान्तरः प्रयत्नः, बाह्यस्त्वभ्यासः, तावुभावपि
शक्तिमुद्भासयतः शक्तिकर्तृके हि प्रतिभा-व्युत्पत्तिकर्मणी ।
शक्तिरेव केवलं काव्ये हेतुरिति यायावरीयः २२

**शतसाहस्रीसंहिता** (महाभारतम्) १७

**शब्दश्लेषं शेषः** ११

**शब्दहरणं** पञ्चधा पदतः, पादतः, अर्थतः, वृत्ततः, प्रबन्धतश्चेति ६६

**शब्दहरणोपायाः** । १२

**शब्दार्थहरणेषु** कविभेदाः (द्वादशोऽध्यायः) । ७२

**शब्दार्थहरणोपायाः** । १२

**शब्दानामन्वाख्यानं** व्याकरणम् । १३
शब्दार्थोक्तिषु यः पश्येदिह किञ्चन नूतनम् ।
उल्लिखेत् किञ्चन प्राच्यं मान्यतां स महाकविः ॥३०८॥ ७१

**शब्दार्थौ ते** (काव्यपुरुषस्य) शरीरम् १६
संस्कृतं मुखम् प्राकृतं बाहुः, जघनमपभ्रंशः,
पैशाचं पादौ, उरो मिश्रम् ।
समः प्रसन्नो मधुर उदार ओजस्वी चासि ।
उक्तिचणं ते वचः, रस आत्मा, रोमाणिच्छन्दांसि,
प्रश्नोत्तर-प्रवह्लिकादिकं वाक्केलिः,
अनुप्रासादयस्त्वामलङ्कुर्वन्ति । १६

**शब्दाहरणम्** (११ अध्यायः) ६६

**शरद्** शरदि अनियतदिक्को वायुः । ११४

**शास्त्रकविः** १५

**शास्त्रनिर्देशः** १२,१३

**शास्त्रपूर्वकत्वात्** काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत । १३

**शास्त्रसंग्रहः** ११,१२

**शिशिरः** शिशिरे उदीच्यः पाश्चात्त्यो वा वायुः । ११४

**शिष्यः** २१

**शुक्लगौरयोरेकत्वेन** निबन्धनं कविसमयः ९७

**शूरसेनजनपदः** १८

**शेफालिका** 'हरसिंगार' इति लोके प्रसिद्धः पुष्पवृक्षः । ११६
**शेषः** शब्दश्लेषस्य प्रवर्त्तक आचार्यः ११
**शैवसिद्धान्तीयः** ४९
**शौचम्** कविर्नित्यं शुचिः स्यात् । त्रिधा च शौचम् - वाक्शौचम्, मनःशौचम्, कायशौचं च ।
**शुचि शीलनं हि सरस्वत्याः संवननमामनन्ति ।** ६०
**श्यामदेवः** २१,२२
**श्रीकण्ठः** (शिवः, राजशेखरः) काव्यमीमांसोपदेष्टा ११
**श्रुत्यर्थस्मरणात्** स्मृतिः । ता अष्टादश । १४
**श्रूयते च** १. कुन्तलेषु सातवाहनो नाम राजा, तेन प्राकृतभाषात्मकमन्तःपुर एव ... ६१
२. उज्जयिन्यां साहसाङ्को नाम राजा । तेन च संस्कृतभाषात्मकमन्तः पुर एव ....। ६१
३. सू(शू)रसेनेषु कुविन्दो नाम राजा तेन परुषसंयोगाक्षरवर्जमन्तः-पुर एव ....। ६१
४. उज्जयिन्यां काव्यकारपरीक्षा । 'इह कालिदास'०० ६५
५. पाटलिपुत्रे शास्त्रकारपरीक्षा । 'अत्रोपवर्षवर्ष'०० ६५
**संयोगविकारः** ५२
**संस्कृतस्थाः** ६१
**सकल-विद्यास्थानैकायनं पञ्चदशं काव्यं विद्यास्थानमिति यायावरीयः**, गद्यपद्यमयत्वात् कविधर्मत्वाद्धितोपदेशकत्वाच्च । १४
**सङ्क्रान्तम्** अन्ययोनिप्रतिबिम्बकल्पविकल्पः ७७
**सङ्ख्योल्लेखः** तुल्यदेहितुल्यविकल्पः ८३
**सतृणाभ्यवहारिणः** तत्त्वाभिनिवेशिन इव अविवेकिनः २४
**सतृणाभ्यवहारिता** सर्वसाधारणी । २४
**सतोऽपि गुणस्यानिबन्धनम्**, कुन्दकुड्मलानां कामिदत्ताना च रक्तत्वम्, कमलमुकुल-प्रभृतेश्च हरितत्वम्, प्रियङ्गुपुष्पाणां च पीतत्वम् ॥ ९६
**सतोऽपि क्रियार्थस्यानिबन्धनम्** । यथा दिवा नीलोत्पलानामविकासः, निशा-निमित्तकश्च शेफालिकाकुसुमानाम् अविस्रंसः । ९४
सतोऽपि अनिबन्धनं यथा न मालती वसन्ते, न पुष्पफलं चन्दनद्रुमेषु, फलमशोकेषु । ९१
**सत्कारः** परपुरप्रवेशसदृशविकल्पः ८७
**सप्तपलाशः** (सप्तपर्णः, सप्तच्छदः) (पद्य १८.१८) ११६

**समक्रमः** सदृशसञ्चारणम् अन्ययोनि-आलेख्यप्रख्यविकल्पः । ७९
**समाधिः** मनस एकाग्रता । समाहितं चित्तमर्थान् पश्यति २१
**समासवृत्तिः** षोढा द्वन्द्वः,द्विगुः,अव्ययीभावः,तत्पुरुषः,कर्मधारयः,बहुव्रीहिः ३२
**समीक्षा** अन्तर्भाष्यं समीक्षा १५
अवान्तरार्थविच्छेदश्च समीक्षा १५
**समुचिताख्यातम्** (वाक्यम्) ३३
**समुद्रः** त्रयः समुद्रा इत्यन्ये
चत्वारः इत्यपरे
भिन्नाभिप्रायतया सर्वमुपपन्नमिति यायावरीयः । १०५
सप्तसमुद्रीवादिनः शास्त्राख्याऽनपेताः ।
**सम्पुटः** अन्ययोनिप्रतिबिम्बकल्पविकल्पः
**सम्राट्** सप्तापि द्वीपान् यो जयति स सम्राडित्युच्येत । १०६
**सम्वर्गकः** कविः ७१
**स यत्स्वभावः कविस्तदनुरूपं काव्यम्** ६०
**सरस्वती** १६
**सर्वपार्षदत्वं काव्यविद्यायाः** । सर्वानर्थान् व्युत्पत्तये प्रत्यवेक्षेत । ४९
**सहकारपाकः** । ३१
**सहस्राक्षः** ११
**सा कविसभा** षोडशभिः स्तम्भैः, चतुर्भिर्द्वारैरष्टभिर्मत्त-
वारणीभिरुपेता स्यात् । ६४
**साकाङ्क्षा काकुस्त्रिविधा** आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा चेति ।
साकाङ्क्षा काकुर्वाक्यान्तराकाङ्क्षिणी ४१
**साङ्ख्यं न्यायवैशेषिकौ** चोत्तरः पक्षः । १५
**सातवाहनो** नाम राजा । ६१
**सात्वती वृत्तिः** १९
**सान्द्रेन्द्रगोपानि** च शाद्वलानि ११५
**सामन्** सामवेदः ऋचः सगीतयः सामानि १३
**सायम्** सायंसन्ध्यामुपासीत । ततो दिवा-विहित-परीक्षित-
स्याभिलेखनम् आप्रदोषात्
यावदार्त्तिं स्त्रियमभिमन्येत,
द्वितीयतृतीयौ साधु शयीत ।
सम्यक् स्वापो वपुषो परमारोग्याय । ६३
**सारसः** पक्षी ११६

**सारस्वतकविः** १७

**सारस्वतोऽनुभावः** २१

**सारस्वतेयः** काव्यपुरुषः ११,१७,१८,१९,२०

**काव्यपुरुषः** सारस्वतेयः ११,१६,१७

**सारस्वतेयोपज्ञं** छन्दस्वत् १६

**साहसाङ्कः** उज्जयिनीविक्रमादित्यस्योपाधिः । ६१

**साहित्यविद्या शब्दार्थयोः सहभावेन विद्या साहित्यविद्या ।** १५

**साहित्यविद्यावधूः** १८

**सिद्धं च** प्रबन्धमनेकादर्शगतं कुर्यात् । यदित्थं कथयन्ति
निक्षेपो विक्रयो दानं देशत्यागोऽल्पजीविता ।
त्रुटिको वह्निरम्भश्च प्रबन्धोच्छेदहेतवः ॥ ६३
पुनःसमापयिष्यामीति प्रबन्धविनाशकारणानि ॥ ६४

**सुरानन्दः** आचार्यविशेषः ८५

**सुराष्ट्रजनपदः** गुर्जरोत्तरे विद्यमानः काठियावाडनामा समुद्रतटभूभागः १९

**सुवर्णनाभः** रीतिनिर्णयं सुवर्णनाभः । ११

**सुह्मदेशः** गङ्गाद्वीपे वङ्गभुवि प्रसृतो भूभागो यस्य दक्षिणेन कपिशा
नदी, यां रघुर्द्विरदसेतुना ततार (रघुवंशे ४.३५) १८

**सूरसेनः** मथुरां राजधानीकृत्य प्रसृतो जनपदः । ६१

**सौगन्धिकम्** सुरभिपुष्पविशेषः ११६

**स्वतन्त्रस्य** कवेरेकभाषावत् सर्वा अपि भाषाः स्युरिति यायावरीयः ।
स्मितपूर्वमभिभाषणम्, सर्वत्रोक्तिगर्भमभिधानम्, सर्वतो-
रहस्यान्वेषणम्, परकाव्यदूषणवैमुख्यमनभिहितस्य,
अभिहितस्य तु यथार्थमभिधानम् । ६१

**स्मृतिः** अतिक्रान्तस्यार्थस्य स्मर्त्री बुद्धिः । २१

**स्वयम्भुवः** प्रथमं वचः श्रुतिः, श्रुतेरन्यच्च स्वायम्भुवम् । ३९

**स्वयम्भूः** प्रजापतिर्ब्रह्मा ११,२०
स्वयम्भूमनोजन्मानो भृगुप्रभृतयः पुत्राः । त ईश्वराः ।
तेषामैश्वरम् । ईश्वराणां सुता ऋषयः, तेषामिदमार्षम् ।
ऋषीणामपत्यानि ऋषीकाः, तेषामार्षीकम् ।
ऋषीकाणां सूनवः ऋषिपुत्रकाः, तेषामार्षिपुत्रकम् । ३९

**स्वर्गमर्त्य-** पातालभेदास्त्रीणि जगन्ति इत्येके । १०३

**स्वर्गमर्त्यपातालान्येव** भूर्भुवःस्वस्त्रीणि जगन्तीत्येके । १०३

**हरणं** द्विविधं परित्याज्यमनुग्राह्यञ्चेति । ६६

**हस्तिनापुरम्** कुरूणां राजधानी दिल्लीतः पश्चिमोत्तरेण
गङ्गातीरे निवेशिता पूः । १८
**हस्तिनापुरजनपदः** १८
**हस्तिशिक्षा** ५१
**हिरण्याक्ष**-हिरण्यकशिपु-प्रह्लाद-विरोचन-बलि-बाणादयो दैत्याः ।
विप्रचित्ति-शम्बर-नमुचि-पुलोम-प्रभृतयो दानवाः,
बल-वृत्र-विषु-रस्त-वृषपर्वादयोऽसुराः ॥ १०१
**हुड्डयुद्धम्** कश्मीराणामुत्तरवर्त्ती हुष्कपुरनामा ग्रामः । तत्रत्या योद्धारः
पौनःपुन्य-माश्रयाणा युध्यन्ते स्मेति प्रकृतात् सन्दर्भात्
सिद्ध्यति । परपुरप्रवेशविकल्पः । ८६
**हेतुव्यत्ययः** अन्ययोनि-प्रतिबिम्बकल्पविकल्पः ७७
**हेमन्त ऋतुः** हेमन्ते पाश्चात्त्यो वायुरित्येके
उदीच्य इत्यपरे,
उभयमपीति यायावरीयः । ११४

॥श्रीः॥
०५.१०.१४,
०३.०३.१५